वाणीं भजत गैर्वाणीम्!

# गैर्वाणी

मासिकी पत्रिका






| | | |
|---|---|---|
| संपुटः १६ | MARCH 1978 | क्रमांकः ३ |



| | | |
|---|---|---|
| पिङ्गळ फाल्गुनाङ्कः | शकाब्दाः १८९९ | मूल्यम् ०-५० पैसाः |

# विषयसूचिका










— बालगणपतिभट्टः, श्रीरङ्गपत्तनम् ।

रामो दशस्यन्दनदेहजो यः तस्यानुजो लक्ष्मणनामशोभी ।
ख्यातश्च यस्तत्सदृशो यतीन्द्रः रामानुजं तं सततं भजामि ॥ १

ख्यातोऽपि रामः करुणाप्रदाने यस्माद् बभूवाऽवरजो यतीन्द्रात् ।
कारुण्यपूर्णं करुणावतारं रामानुजं तं सततं भजामि ॥ २

रामो हली यो वसुदेवसूनुः श्रीकृष्णनामा ह्यनुजश्च तस्य ।
ख्यातश्च यस्तत्सदृशो यतीन्द्रः रामानुजं तं सततं भजामि ॥ ३

भूभारभूतावनिपघ्नरामं यो वा चकारावरजं यतीन्द्रः ।
अशेषभूतं श्रुतिवैरिवर्गं चिच्छेद रामानुजमाश्रये तम् ॥ ४

रामांशभूता रमणीयरामा 'गोदा' च यस्याऽवरजा बभूव ।
ततो हि रामानुजनामको यः तं देशिकेन्द्रं सततं भजामि ॥ ५

"अनन्त"नामा प्रथमे युगे यः युगे द्वितीये ननु "लक्ष्मणाख्यः ।
युगे तृतीये बलरामनामा रामानुजाख्यश्च कलौ भजे तम् ॥ ६






# गैर्वाणी

१५-३-१९७८ * पिङ्गल चैत्राङ्कः


## भारते सर्वकारपक्षाः

गत फिब्रवरिमास निर्वचनफलितेषु प्रकटितेषु, इदमद्य सुविशदं भवति यत् कांग्रेस्पक्षात् निर्गतः कांग्रेस् (इ) (इन्दिरा अथवा इन्डिपेण्डेन्ट्) पक्षः कर्नाटके आन्ध्रप्रदेशे च बहुमतानुगृहीत स्सन् निर्वाचितः। एवं च दक्षिणभारते उभयत्र कर्नाटके आन्ध्रप्रदेशे च सर्वकरपक्षः संवृत्तः कांग्रेस (इ) पक्षः। महाराष्ट्रे जनतापक्षस्य बहुमतप्राप्तावपि सर्वकार - निर्माणे उभयकांग्रेस्पक्षयोर्नीति रेकविधैव समभवत्। द्विदलननीतिः कांग्रेस्पक्षस्य निर्वाचनफलानुगा सती सफलैवाऽभूदिति राजकीयपरिशीलकै स्संभाव्यते। महाराष्ट्रे समैक्यविधानेन सर्वकारनिर्माणकौशल मपि प्रदर्शित मासीत् द्विदलकांग्रेस्पक्षेण। स्वपक्षवैमनस्यं परिहर्तुं यदि नेतृभिः प्रयत्नः इतोऽप्यधिकः क्रियेत तर्हि सर्वकार निर्वहणसामर्थ्यं द्विगुणीकृतं भवेत्। राजनीतिकौशलप्रदर्शने

कांग्रेस्पक्षस्य द्विदलनं यथा आवश्यक मासीत् तथा सर्वकार-निर्वहणसामर्थ्यं निरूपयितुं द्विगुणन मप्यावश्यकमेवेति अवधेयम् । प्राधान्य गौणभाव विपर्यासः यस्मिन् कस्मिश्चिदपि पक्षे कालानुगुण मनिवार्य एव भवे त्कदाचित् क्वचित् । पक्षश्रेयोभिलाषिभिः अस्मिन्नेतादृशे च सन्दर्भे त्यागः कर्तव्यो भवति । कांग्रेस्पक्षीयाः सौभ्रात्रं मनसि विचिन्तयेयुश्चेत् केन वा कदा वा कथं वा कुत्र वा त्यागः कर्तव्यः इति प्रश्न एव न स्यात् ।

* * * * *

जनतापक्षेण अनुसृता राजनीतिः अवकाशवादं पुष्णाति स्म; येन तस्य इतः पूर्वं समुपलब्धा लोकमान्यता लोकमन्युविषयतां गतेव । किञ्च, दक्षिणाशाया सा सफला नाऽभवत् । जनतायाः सहानुभूतिः जनतापक्षे नाऽद्यावधि दक्षिणभारते सौहार्दपुरस्सरा संजाता । तत्र किं कारणमिति पर्यालोचनीय मेव भवति । भिन्न-भिन्नपक्षाणां सर्वकारैः प्रवर्त्यमाने शासने सामान्यजनानीकस्य यदपेक्षितं न तन्निकटभविष्ये कल्पनागोचरम् । दैनंदिन जीवनभारः सामान्यजनस्य न केवलं ह्रासं न गत इति, अपितु यथावस्थितस्थिति मप्यतिक्रम्य अरुन्तुद एव भूत्वा उद्वेजयति । जीवन व्ययप्रमाणानुरोधेन जीवनोपायसरणौ नित्यजीवनोपयोगि वस्तुमूल्यविनिर्णयः परिष्करणीयः । सेवाश्च यथाकालं जनतायाः कृते प्रापयितव्याः । तदैव जनतायाः सद्भावः सहकारश्च सर्वकारेण लब्धुं शक्येत । लोकतन्त्राधीने अनुशासने लोकाना माराधनं केन्द्रीय - प्रादेशिक - सर्वकारैः संभूय कार्यप्रणालीद्वारा कर्तव्यं भवेत् । तदर्थं सर्वं कार्यजातं संसदीयं संविधनं निबद्ध मवश्यं भवेदेव । यावता कालेन यदवश्यं कर्तुं शक्यं भवेत्, तदवश्यं कार्यान्वयं प्राप्नुयात्तावता कालेन । जनतापक्षस्य अर्थनीतिः

संश्लिष्टा विलष्टा चेति भाति । अस्थिरता सर्वथा दूरीकर्तव्या। द्रव्योल्बणविधानेन द्रव्यस्फीत्या वा साधनीयं न किमप्यस्ति अर्थनीतौ ! वस्तूत्पत्तिः उपभोगः सेवा-विभागश्चे त्येतेतेंऽशाः देशीयार्थिकपुष्टौ अवधेया भवन्ति । राज-नैतिकक्षेत्रे भाषाविवादस्य पुनरवकाशः प्राप्त इव । परन्तु सर्वकारस्य दृढवैकर्या पूर्वोत्तरसन्दर्भानुरोधेन स विवादो निरसनीयः ।

• • • • •

आन्ध्रप्रदेशे कांग्रेस् (इ) पक्षे बहुमतानुगृहीते, सर्वकारनिर्वाहनायकत्वेन श्री मर्रि चेन्नारेड्डिमहोदयः सर्वसम्मत्या निर्वाचितः आन्ध्रभाषायां मुख्यमन्त्रिपदवीं निर्वोढुं प्रमाणवाक्योच्चारणमकरोदिति आन्ध्रजनतायाः हर्षं मुत्पादयति । आगामिनि उगादिमहोत्सवे श्री रेड्डिमहोदयस्य सर्वकारनीतिः अधिकारभाषाविषये प्रस्फुटा भवेदिति आशास्यते । तेलंगाणा-सर्कार्-रायलसीमा भेदं प्रादेशिक प्रगतिपथे श्रीरेड्डिः विस्मार्य समग्रान्ध्रप्रदेशविकासे केन्द्रीयसर्वकारसहकारं सर्वथा प्राप्नुयादिति च आशास्यते ।

• • • • •

१८९९ शा० शकसंवत्सरः अस्मिन् मार्च्मासे २२ तमे दिनांके निर्गमिष्यन् नूतनशकसंवत्सरस्य (१९००) स्थानं दास्यति । भारतीयसर्वकारेण सम्मादृत शकसंवत्सरीयं विधानं शताब्दिपूर्तिमेष्यति न चिरेण । भारतीयैतिहासिकप्रामुख्यं सांस्कृतिक - लौकिकप्राधान्यं च प्राप्तवदिदं राष्ट्रीयपञ्चाङ्गविधानं भारते सर्वजनामोदयोग्यं भूयादिति आगामी नूतनशकवर्षः भारतस्य नित्यनूतनं दृक्पथं सम्पादये दिति च आशास्यते ।



# अभिनन्दनपत्रम्

सेवायाम् —

श्रीमान् श्रीकृष्णसेमवाल् एम्..ए.
(व्याकरणाचार्यः, साहित्यरत्नम्)
मन्त्री, श्रीरामचन्द्रभारती -
अभिनन्दन - ग्रन्थसमितिः ।
२५१८-चूडीवालान्, देहली-110006.



मान्य महोदय,

सविनयप्रणयं प्रणामः । भवदीयं पत्रं अभिनन्दन-ग्रन्थविषयकं प्राप्तम् ।

तत्र भवतां सकाशे इदं निवेद्यते यत् लोकतन्त्रायत्ते अस्मदीये भारतीय जन जीवने "वैशेषिकन्यायदर्शनं" काले काले श्रुतिपथमायातीति हर्षनिर्भराः स्म इति ।

"वैशेषिकन्याय" शब्दस्य मदभिप्राय स्तावत् — विशिष्टरूपेण सेवा मातन्वानानां यदि मान्यताप्रदानं न स्यात् तर्हि भारतीयसंस्कृतेः लोप एव भविता । तत्राऽपि संस्कृति परीवाहभूतस्य संस्कृतस्य कृते कृतानां क्रियमाणानां करिष्यमाणानां च प्रयत्नानां स्मरणं, अभिनन्दनं प्रोत्साहनं च यदि न भवेत्, तर्हि "वैशेषिकन्यायस्य" सर्वात्मना लोपः भवे देव । सामान्य विशेषन्याय एव हि भारतीय समैक्य वैविध्य भावोपजीवकः । एकत्वे च भिन्नत्वं, भिन्नत्वे तु एकत्वं द्रष्टव्यं दर्शनीयं च । इदमेव हि

दर्शनं नाम। श्रीरामचन्द्रभारतीमहोदय स्तावत् "बहूना मेति प्रथमः बहूना मेव मध्यमः", "यद्य द्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा" इत्य अतः भारतीयाराधनाविधानं नैकविधम्। सर्वं खल्विदमिति सामान्यं चे यद्यद्विभूतिमदिति विशेषः स्यात्। वैशेषिकः न्यायपालनं विभूतियोगानुष्ठानमेवेति मन्यते।

श्रीरामचन्द्रभारतीमहोदयस्य "संस्कृतप्रचारकात्मकस्य" तत्र भवद्भिः प्रवर्तिष्यमाणः अभिनन्दनोत्सवः सर्वथा सुसम्पन्नो भूयादित्याशास्महे।

इत्थम्,
आ. वरदराजः,
उप-सम्पादकः, "गैर्वाणी"
चित्तूरु (आ. प्र.)



## अवश्य कर्तव्य मिदं हि साम्प्रतम्

— वैद्यः– रामस्वरूपशास्त्री,
सम्पादकः, बालसंस्कृतम्, बम्बई।

सुभोजनं वस्त्र मथो गृहं च जगत्यपेक्षा प्रथमा जनस्य।
समीहितं यो लभते न काले नाऽभावदूनः सहते न जीवितुम्॥ १

धान्यानि सर्वस्य जनस्य जीवः अन्यै र्नगण्णै रुदयैः किमन्यैः।
नृपालभोग्ये भवने वसन्तं बुभुक्षितं कं प्रतिभाति सौख्यम्॥ २

दिवा द्विवारं लभते न भोक्तुं,
दारिद्र्यतो यो लभते न वस्त्रम्।

न मन्दिरे चाऽस्ति तिलं न तण्डुलं,
निद्राति किं तत्र बुभुक्षितो जनः ॥ ३

न भारते सम्प्रति धान्यपूर्तिः शिक्षा न दीक्षा न च सभ्यताऽपि ।
सभ्योऽपि लोकः प्रकरोति चौर्यं नाऽभावदूनः कुरुतेऽपराधम् ॥ ४

दत्वेह रिक्थं लभते न भोक्तुं जन्तो नं दुग्धं लभते पवित्रम् ।
घृतस्य वाचाऽपि च वञ्चितः सः, कुभोजनः किं सहते परिश्रमम् ॥

शालासु शिष्याः न पठन्ति सम्यक्,
क्षेत्रेऽपि भृत्यो न करोति कार्यम् ।
गेहेऽपि भार्या न निषेवते पतिं,
कोऽभावदूनः सहतेऽनुशासनम् ॥ ६

रोद्धुं प्रयुंक्ते जन - जन्मवृद्धिं,
कर्तव्यवृद्धेश्च प्रयाति दूरम् ।
किं पूरुषः किं न करोत्यनर्थं,
दारिद्र्यदूनं विजहाति बुद्धिः ॥ ७

धन्याः स्वदेशस्य धुरन्धरा ये,
लोकस्य रक्षां यदि कामयेरन् ।
कुर्वन्तु कर्णेषु च सावधानाः,
छिद्राणि गेहस्य मयोदितानि ॥ ८

धान्यानि लब्धुं कृषिकर्म कुर्युः,
गोपालनं गव्यविधस्य लब्धये ॥
वासाय लोका श्शरणं लभेरन्,
अवश्यकर्तव्य मिदं हि साम्प्रतम् ॥ ९

# अद्यतनविद्याभ्यासः – २

दीवि श्रीनिवासदीक्षितः, ताडिकोण्ड ।

मानवानां मानसे तमसाऽवृते बहुविधा श्शक्तय स्तिष्ठन्ति । ताः शारीरिक - मानसिक - नैतिकशक्तयः । ताश्च न स्वतः प्रकाशन्ते । विद्यया दूरीकृते तस्मिस्तमसि तेजोऽवरोधिनि तास्ताः शारीरिक - मानसिक - नैतिकशक्तयः प्रकाश मासाद्य पुमांसं विद्वांसं कुर्वन्ति । तेनैव प्रकाशेन मानवानां शीलं शुध्यति, स्वभावो विवेकभाग्भवति, चरितं चारुता मञ्चति । वस्तुतः मानवस्य शारीरिक - मानसिक - नैतिकशक्तयः सुप्ताः यया प्रकाशेन बोध्येरन्, लौकिक - पारलौकिकविषयाणां वास्तविकं ज्ञानं यया प्राप्यते, सा विद्या । न केवलं कस्यचिद्ग्रन्थस्य कण्ठस्थीकरणमेव विद्या ।

**न काचिदपि संशीतिः —**

अद्य विद्यालयेषु विद्यमाना विद्या अविद्या एव । इदानीन्तन-विद्यालयेषु स्थिता स्सर्वे न विद्यार्थिनः । सर्वे नाप्यध्यापकाः अद्यतनाः केचिदध्यापकाः विना श्रमं कालं यापयन्ति । विना श्रमं स्वभृतिं स्वीकुर्वन्ति । विद्यार्थिनः विवेकशून्यान् कुर्वन्ति । अयं महान् दोषः । न क्षन्तव्योऽयं दोषः । न्यायाधिपस्य दोषेण एकः एव नरः भीकरमृत्युदंष्ट्रादष्टो भवति । भिषजः वैद्यदोषेण एकः प्राणी एव कालकन्या - प्रगाढपरिष्वङ्गलग्नो भवति । गृहिणः दोषेण तत्कुटुम्बमेव नश्यति । राज्ञः दोषेण तात्कालिकजनाः एव बाधा मनुभवन्ति । किन्तु सर्वदेवात्मकस्य

(पूर्वतनकाले) आचार्यस्य अध्यापने यदि दोषस्सम्भवति पारम्पर्येण सर्वा अपि जाति र्भ्रष्टा भवति, विनश्यति।

अद्यतन विद्यार्थिनस्तु स्वपाठ्यपुस्तकानि न पठन्ति। पाठ्येतरपुस्तकानि तात्कालिकोद्रेककराणि तात्कालिकानन्दायकानि पठन्ति। केवल प्रश्नोत्तराण्येव दिवारात्रं परीक्षासमये समासन्ने एव पठन्ति। अपीयं विद्या? अप्येते विद्यार्थिनः? अप्यमी अध्यापकाः? न हि ........ नितरां न हि। केवल कालक्षेपकराः अद्यतनविद्यालयाः प्रायेण इत्यत्र न काचिदपि संशीतिः।

## निजस्थितिः कथं गोप्या?

अद्यतनकाले विद्यार्थिभि स्साकं केचिदाचार्या अपि अधर्म्यं पन्थान माश्रिता इति महान् खेदः। विद्यार्थिनस्तु अध्ययनादिकं दूरतो निरस्य येन केनाऽप्युपायेन परीक्षासु उत्तीर्णतामेव (तत्राऽपि उत्तमश्रेणीमेव) साधयितु मिच्छन्ति। परीक्षासु यथा कथञ्चित् लिखित्वा ततः परीक्षकस्य (Examiner) समीपं गत्वा श्रेणीमूल्यं (Class Donation) दत्वा श्रेण्या मुत्तीर्णा भवन्ति। केचिदाचार्या अपि निर्लज्जं श्रेणीमूल्यं स्वीकुर्वन्ति। सर्वेषां समता श्रेणीमूल्यविषये। न ह्येकस्मिन् दोषोऽत्र। द्वयो र्दोषः समापतति। करद्वयसंयोगेनैव ध्वनिः। नान्यथा........। एतादृशी व्यवस्था विद्यारङ्गे सर्वत्र व्याप्ता। कदा वा मुक्ति रस्याः व्यवस्थायाः? को वा एतदुद्धारकः?

## शोचनीयः विषयः!

"श्रुतेन यत्नेन च वागुपासिता।
ध्रुवं करोत्येव कमप्यनुग्रहम्॥"

इति सूक्ति र्हि सुधापयोक्तिः पुरा। अधुना तु अतिशयोक्तिरिति बहुमतं मतम्। ते च न तत्ववेत्तारः। अपि च नग्नसत्यमिदं यत् — अद्य विद्यामार्जितवानपि नरः जाठरज्वालया दंदह्यते। जीवनसंग्रामोऽहरहर्भीषणतादशां प्राप्नुवन् प्रतीयते। लोके उद्योगेन भिक्षुको रक्षको भवितु मर्हति। दुर्बलो बलवान् भवति। दुःखितश्च परमं सुखं प्राप्नोति। किन्तु यद्येकत्र पदे रिक्ते सहस्रमितानि प्रार्थनापत्राणि (Applications) परापतन्ति। तत्राऽपि महान् कलापः।

**अनुकरणव्याधिः —**

सृष्टिधर्ममीमांसया "परानुकरणं जीवजालस्य स्वभावः" इति विज्ञायते। अग्ने रौष्णयमिव, जलस्य शैत्यमिव प्राणिनां परानुकरणं सहजसिद्धम्। एवं प्रकृतिदत्तानुकरणशक्ति न हि व्यर्थां कुर्यात्। सदसद्विवेचनं कर्तव्यम्। नीरक्षीरविषये हंसः यथा प्रवर्तते तथैव विद्यार्थिभि रपि परानुकरणविषये प्रवर्तितव्यम्। अद्यतनसमाजः भ्रष्टः। सर्वं मनुकुर्वन्ति सामाजिकाः। किन्तु अनुकरणस्य विधिनिषेधौ - देशकालौ स्तः। अद्य प्रमादतः भ्रष्टवस्त्रं धारयत्येकः चेत्, श्वः सहस्रसंख्याकाः जनाः भ्रष्टवस्त्रधारिणः भवन्ति। विदेशेषु धूमपानं दृष्ट्वा अस्मद्देशीया अपि धूम्रपानरता अभवन्। अद्य — "Cigarette smoking is injurious to health (Statutory warning)" — इत्यादि प्रबोधनप्रचुरणमपि क्रियते। सर्वेष्वपि तमाखुनालीसमुद्गलेषु (on the cigarette packets)। एतत्प्रबोधनानन्तरमेव तमाखुनाली व्यापारः प्रगतिपथं गतः। शीतलप्रदेशेषु (विदेशेषु) धूमपानं युक्तम्। उष्णमण्डलेषु धूमपानं भयङ्करव्याधिसम्पादकम्। तथाप्यनुकुर्वन्ति। "नागरिकास्ते" इति तुष्यामः किम्? अहोस्वित् उन्मादिनः इति परिहसामः? उताहो भ्रष्टाः इति रुदिमः।

प्रायशः एतदनुकरणव्याधिग्रस्ताः विद्यार्थिनः एव ।

**विद्यार्थिन्यः अपि........**

विद्यार्थिन्यः अपि परानुकरणं बहुधा कुर्वन्ति । तासामलङ्करणपद्धतय एव तत्र साक्षिण्यः । इदानीन्तनकाले विद्यार्थिनां विद्यार्थिनीनां च नास्ति ईषदपि भेदः । "नी" इति तासामधिकम् । विद्यार्थिनः इव विचित्रवस्त्रधारणं (Bell bottom pants & Shirts etc.,) कुर्वन्ति विद्यार्थिन्यः । तै स्सह यथेष्टं सञ्चरन्ति ताः । अहो ! विधे विलासः ।

परानुकरणं प्राणिनां स्वभाव एव । सत्यम् । किन्तु तत्र सदसद्विवेकः कर्तव्यः । याचकः जीर्णमलिनांशुकधारी याचति सर्वत्र अटन् । सन्दोऽपि नाऽनुसरति तं याचकम् । कुतः ? सर्वे जानन्ति ........ ।

अद्यतन - आन्तरदर्शनानि "Interviews" अपि अविनीतिमार्गमेवाश्रिताः ।

**फलानुमेयाः प्रारम्भाः !**

निरातङ्कं परिपालयितु मस्मद्देशं पाश्चात्यै स्समाश्रिताः खड्गतुल्या स्त्रयः पन्थानः । न त्वाश्रितः खड्गः ।

१. अस्माकं जीवनविधानस्य करदीपिका संस्कृतभाषा निरादृता । स्वकीय आंग्लभाषा राज्यव्यवस्थायां सर्वत्र प्रवेशिता । ततः भाषा भ्रष्टा ।

२. या प्रभुत्वप्रवेशिता सैव भाषा समाश्रयणीया सर्वैरपि पालितैः । आंग्लभाषासमाश्रितानामेव उद्योगप्राप्तिरिति शासनम् । प्रायशः सर्वे आंग्लभाषा माश्रिताः तदानीम् । ततः भावः भ्रष्टः । अंकुरिता आंग्लभावाः ।

३. तृतीयं वेषपरिवर्तनम् । यदा भावा विदेशीयाः अंकुरितास्तदा अविनाभावसम्बन्धन्यायमनुसृत्य वेषोऽपि परिवर्तितः ।

"फलानुमेयाः प्रारम्भाः ।" तेषा सांग्लेयानां नीतिनेतृता मद्यतनभारतदेशः उद्घोषयति मुक्तकण्ठम् । सत्यम्! अद्यतन भारतदेश स्सर्वोऽपिप्रायेण भावतः पाश्चात्यः । नैव प्राच्यः। नैव नैव नैव शतवारं नैव। अस्माभि स्सम्पादितं स्वराज्यं आर्थिकं तान्त्रिकञ्च । न हि सांस्कृतिकम् । एतत्सर्वमपि पाश्चात्यानां बुद्धिवैभवस्य फलमेव ।

## रक्षन्तु भारतीयत्वम् —

पुरा भारतीया जनता सनातनधर्मानुसारिणी । भारतीय सभ्यता महत्वपूर्णा । किन्त्वद्य भारतीयाः पाश्चात्य संस्कृत्या वञ्चिताः तामेव शरणं व्रजन्ति । "मातः!" "पितः!" इत्यादि सम्भोधनस्थाने "Mummy,', "Dady" इत्यादि पदानि प्रयुञ्जन्ति। पितरौ तेन प्रयोगेनैव मोद मत्यन्त मनुभवतः । एषा स्थिति स्तीव शोचनीया । अतः युक्तं मार्गं समालम्ब्य रक्षन्तु........ ।

## सेवन्तां संस्कृतम् —

विशालसाहित्योपेता संस्कृतभाषा । सकलधर्ममहोदधिः, समस्तभावसमाकलिता, सर्वशास्त्रसम्पूर्णा, सुधामधुरा संस्कृतभाषा। संस्कृतं संस्कृते स्संरक्षकम् । भारतीयाना मैक्यतासाधनं संस्कृतम्। संस्कृतं संस्कृते निधिः । संस्कृतं संस्कृतेः सजीवं चित्रम् ।

अत स्सर्वदा सर्वे सेवन्तां संस्कृतभाषाम् । सदा संस्कृतभाषा सर्वकारेण रक्षणीया पोषणीया च । नष्टायां तस्यां देशस्यैव महती हानिः ।

जयतु वाणी ............ जयतु गैर्वाणी ।

# षड्विधं सूत्रलक्षणम्

शिष्टि वेङ्कटलक्ष्मीनारायणशर्मा,
साहित्यविद्याप्रवीणः।

व्याक्रियन्ते = साधुत्वेन व्याख्यायन्ते शब्दाः अनेन इति विग्रहे निष्पन्नात् वि, आङ् इत्युपसर्गद्वयपूर्वकात् कृञ् धातोः करणार्थे "ल्युट च" इति सूत्रेण ल्युटि "व्याकरणं" इति शब्दो भवति। यच्छास्त्रेण एते साधुशब्दाः एते असाधुशब्दाः इति विविच्य प्रदर्श्यन्ते तच्छास्त्रं व्याकरणशास्त्र मित्युच्यते। तच्च नवविधम्—

"ऐन्द्रं चान्द्रं काशकृत्स्नं कौमारं शाकटायनम्।
सारस्वतं चापिशलं शाकलं पाणिनीयकम्।।" (इत्यार्योक्तेः)

एवं "अवङ्स्फोटायनस्य" इत्युक्तेः स्फोटायनव्याकरणं कात्यायनेन "चयोर्द्वितीयाश्शरिपौष्करसादेरितिवाच्यम्" इत्युक्तेः पौष्करसादि व्याकरणादिकमासीदिति अनुमीयते। "मुखं व्याकरणं स्मृतं" इति शिक्षावचनात् वेदराशेः व्याकरणं मुख्यमङ्गम्। सर्वस्य गात्रस्य शिरः प्रधानं इति अभियुक्तोक्तेः। मुखस्यैव प्रायशः पुरुषभेदादि परिचायकत्व दर्शनाच्च। पाणिनीयं व्याकरणं अधुना मुद्रितं सर्वत्र उपलभ्यत एव। पाणिनि सूत्राणि षड्विधानि —

"संज्ञा च परिभाषा च विधिर्नियम एव च।
अधिकारोऽतिदेशश्च षड्विधं सूत्रलक्षणम्।। (इत्यार्योक्तेः)

१. तत्र <u>संज्ञा</u> — विधिशास्त्रघटकसङ्केतपदनिर्णायकत्वं संज्ञासूत्रस्य लक्षणम्। "आद् गुणः" इत्यदि विधिसूत्रघटकगुणादि-

सङ्केतपदानां अदेङ् रूपार्थे शक्तिः इति निर्णयतीति "अदेङ् गुणः" इत्यादीनि संज्ञासूत्राणि ।

२. परिभाषा —परितो व्यापृतां भाषां परिभाषां प्रचक्षते । परितः = शास्त्रे सर्वत्र, व्यापृतां = नियमरूप व्यापारवतीं, भाषां = वाचं, परिभाषां वदन्ति इत्यार्योक्तिः । तामनुसृत्य अनियमे नियमकारकत्वं परिभाषा सूत्रस्य लक्षणम् । सन्दिग्धार्थ-निर्णायकत्वमपि परिभाषासूत्रस्य लक्षणम् । "मिदेर्गुणः" "मृज-र्वृद्धिः" इत्यादौ मकारस्य वा? इकारस्य वा? दकारस्य वा? गुणः इत्यादिरूपेण सन्देहे जाते "इको गुणवृद्धी" इति सूत्रं इकः इति षष्ठयन्त पदमुपस्थाप्य मिदेरिकः गुणः स्यात्, मृजेरिकः वृद्धिः स्यात् इति बोधयति । तेन सन्देहनिवर्तकत्वात् इदं परिभाषा-सूत्रम् । किं च परिभाषा स्त्रिविधाः "ज्ञापकसिद्धाः, वाचनिकाः, लोकन्यायसिद्धाः" इति प्रत्याहारेषु इतां न ग्रहणं इत्यादयः अनु-नासिक इत् निर्देशात् ज्ञापकसिद्धाः । इको गुणवृद्धी इत्यादयः वाचनिकाः स्वयं कण्ठरवेणोक्ताः । "एकदेशविकृतमनन्यवत्" = अन्यवन्न भवति । किन्तु स्ववदेव इत्यादयः लोके छिन्नपुच्छेऽपि शुनि श्वत्वव्यवहाररूप लोकन्यायसिद्धाः ।

३. विधिः — अप्राप्तांशप्रापकत्वं विधिसूत्रस्य लक्षणम् । केनापि सूत्रेण अप्राप्तं यणादेशं "इको यणचि" इति सूत्रं प्रापयति । अतः इदं विधिसूत्रम् ।

४. नियमः — सिद्धे सत्यारभ्यमाणत्वं नियमसूत्रस्य लक्षणम् । "तपरः तत्कालस्य" तपरस्य वा अतपरस्य वा अणः अणुदित्सूत्रेण अष्टादशभेदबोधकत्वं सिध्यति । तेषु षड्भेदाः

अपि सन्ति । अतः पुनः तपरसूत्रं व्यर्थं सत् नियमयति । तपरकः अण् यदि सवर्णान् बोधयति, तर्हि षण्णामेव बोधकः नाऽन्येषां" इति ।

५. अधिकारः – स्वस्थले लक्ष्यसंस्कारोपयोगि वाक्यार्थबोधाजनकत्वे सति स्वोत्तरवर्ति विधिवाक्यैक वाक्यतापन्नत्वं अधिकार सूत्रस्य लक्षणम् । "एकः पूर्वपरयोः" इति स्वस्थले लक्ष्यसंस्कारोपयोगि वाक्यार्थं न जनयति, किन्तु स्वोत्तरवर्ति "आद् गुणः" इत्यादि सूत्रैः एकवाक्यतां प्राप्य रमेशः इत्यादि लक्ष्यसंस्कारोपयोगि अर्थबोधं जनयति । अतः अधिकारसूत्रम् ।

६. अतिदेशः — अविद्यमानधर्मप्रापकत्वं अतिदेशसूत्रस्य लक्षणम् । "स्थानिवदादेशोऽनल्विधौ" इति आदेशे अविद्यमानस्थानिवृत्तिधर्मं प्रापयति । राम + य इत्र 'य' आदेशे सुप्त्वं नास्ति । सुप् प्रत्याहारे अभावात् । अतः अनेन सूत्रेण स्थानिभूत ङेवृत्ति सुप्त्वं यादेशे अतिदिश्यते । अतः यञादिसुप्परत्वात् "सुपि च" इति सूत्रेण दीर्घो भवति । अतः इदं अतिदेशसूत्रम् । निषेधसूत्राणि, अपवादसूत्राण्यपि विधिसूत्रेष्वेव अन्तर्भवन्ति । अप्राप्तांशप्रापकत्वात् ।

ननु अप्रामाण्यज्ञानशून्य किंचिल्लक्ष्यसाधकत्वं व्याकरणस्य लक्षणम् । तच्च विधिसूत्रेष्वेवास्ति संज्ञादिसूत्रेषु नास्तीति कथं तेषां व्याकरणत्वं इति चेत् न । परम्परया किंचिल्लक्ष्यसाधकत्वमपि व्याकरणस्य लक्षणमिति कथनेन अदोषात् । "रक्षोहागमलघ्वसन्देहाः प्रयोजनं" इति व्याकरणस्य प्रधानप्रयोजनानि भगवता भाष्यकारेण निरूपितानि । सर्वास्वपि विद्यासु व्याकरणविद्या अतिमूलभूता । "व्याकरणमूलत्वात् सर्वविद्यानां" इति आलंकारिकोक्तेः ।

# विजयपत्र - प्रदानम्

बोब्बिलि विज्ञानविवर्धिनीपरिषत् संस्कृतभाषाप्रचारिण्याः सभायाः चित्तूरुनगरस्थायाः विविध संस्कृतपरीक्षासु उत्तीर्णानां विद्यार्थिनां विजयपत्रप्रदान मकारयत् । तस्याः सभायाः श्रीमान् एस्. टि. पि. वि. कूर्माचार्यः, यम्. ए. — (अधिकारभाषा संघ-सभ्यः आ. प्र. सर्वकारस्य, श्रीकूर्मम्) अध्यक्षोऽभवत् । तेन महोदयेन स्वीयाध्यक्ष भाषणे संस्कृतेनैव जातीय समैक्यता संस्कृतिपरिरक्षणं च भवेदित्युद्घाटितम् ।

परिषत्कार्यदर्शी एस्. रामगोपालशास्त्री परिषत्कार्यकलापं व्यवृणोत् । पार्वतीपुर कलाशाला - आन्ध्रोपन्यासकः श्री जि. यम्. गोपालशास्त्री, प्रमुख कथारचयिता विश्वहिन्दूपरिषत्कार्यकर्ता च श्री आकुण्डि नारायणमूर्तिः, श्री बोब्बिलि राज कलाशाला प्रधानान्ध्रोपन्यासकः श्री यम्. रघुवर्मा, हैस्कूल् (बलिजपेटा) प्रधानाध्यापकः श्री के. सूर्यनारायणः, श्री कलाभारती प्रमुखसभ्यः श्री पि. अप्पलस्वामी, श्री ए. राममूर्तिः, श्रीमती के. विजयलक्ष्मीः, श्री डि. श्रीनिवासः इत्यादयः संस्कृतप्रशस्ति प्रावोचन् ।

गुरुवृद्धः श्रीमान् मन्त्ररत्नं कृष्णमाचार्यः श्री यस्वी. नरसिंहश्च आशींषि प्रायुंक्त । कुमारी श्रीदेवी लक्ष्मीश्च आन्ध्रप्रशस्तिगानं अकरोत् । महिळा कार्यदर्शिनी श्रीमती ए. उमादेवी वन्दनसमर्पण मकार्षीत् ।

वि. वि. परिषत्,
अग्रहारवीथी, बोब्बिलि ।

# वेदस्य पौरुषेयापौरुषेयत्वपरीक्षा

रेगिल्ल नागेश्वरशर्मः,
साहित्यविद्याप्रवीण, पिठापुरम्।

— "व्यासेन प्रोक्तं वैयासिकं महाभारतं" इत्यत्र व्यासरचितत्वेन महाभारतस्य "कठेन प्रोक्तं काठकं" इत्यत्रापि काठकादि समाख्यया तत्कर्तृत्वं च प्रोक्तपदेन निश्चित्य, वेदस्यापि "ईश्वरेण• प्रोक्तं ऐश्वरं" इति पौरुषेयत्वमापादयन्ति ।

जनविलीने प्रलयकाले अन्तर्हितानां वेदानां उत्पत्त्यसंभवात् नास्तीश्वरः — नापौरुषेयो वेदः, न पुनर्जन्मेति समूलोन्मूलवादिनो भणन्ति ।

"कारणाभावे कार्याभावः" इत्यनेन "वेदमुद्वलन्" इति "चिन्तामणि"र्नाम तमिलनिघण्टुवचनेन च कारणभूतेश्वर एव कार्यभूत वेदस्य कर्तेति अभिप्रयन्ति "नो चेत् घटादीनामपौरुषयत्वापत्तिः स्यात्। अतः वेदः पौरुषेयः इति पूर्वपक्षवादिनः। तन्नयुक्तिसंगतं अज्ञजनविलसितत्वात् ।

न कश्चिद्वेदकर्ता च वेदं श्रुत्वा चतुर्मुखः ।
तथैव धर्मान् स्मरति मनुःकल्पान्तरान्तरे ।।

इति पराशरेणोक्तत्वात् "कलौ पाराशरःस्मतः"। इति कराले कलिकालेऽस्मिन् प्रमाणत्वेन पराशरस्मृतिरेव ग्राह्यत्वाच्च वेदकर्तृत्वं आशंक्य निराचष्टे। न कश्चिदिति न तावत् वेदव्यासः कर्ता विभागमात्रकारित्वात्। नापि चतुर्मुखो ब्रह्मा।

ईश्वरेण चतुर्मुखाय वेदप्रदानात् । नापि जगदीश्वरः, नित्यस्य तस्य वेदाभिव्यञ्जकत्वात् । इति मात्स्येऽपि —

अस्य धर्मस्य सर्वज्ञः कल्पादौ परमेश्वरः ।
व्यञ्जकः केवलं विप्राः नैव कर्ता न संशयः ॥

इति ब्रह्मणा चोदितो विष्णुः व्यासरूपी द्विजोत्तमाः! हिताय सर्वभूतानां वेदभेदान् करोति सः इति च निगदितत्वात् व्यासादीनां वा ईश्वरस्य वा तत्कर्तृत्वमपास्तम् । "घटादिकार्यं कर्तृजन्यं" यथा तथैव वेदस्यापि कर्तृत्वमापादयन्ति । तदपि नोचितम् । ईश्वरः ब्रह्माण्डभाण्डोत्पत्तेरेव कारणभूतत्वात् ।

वेदशाखाविषयककठादीनामपि नैव रचयिता विद्यते । कठादिभिः अध्ययनाध्यापनद्वारा तत्तच्छाखाप्रवर्तकत्व सम्भवात् । भारतादिवत् रचयितुर्नाम अदृश्यत्वात् तेषु ग्रन्थेषु ।

वेदस्याध्यनं सर्वं गुर्वध्ययनपूर्वकम् ।
वेदाध्ययन सामान्यादधुनाऽध्ययनं यथा ॥

इत्युक्त्या यथा अध्येतारः (उपाध्यायिनः) पूर्वक्रमं ज्ञात्वा (पूर्ववेदानुपूर्वीं स्मृत्वा) वेदं कुर्वन्ति (वेदक्रमानुसारेण शिष्यान् बोधयन्ति) तथैव अनश्वर ईश्वरः विचित्रगुणमायासहायः अनावृतानन्त स्वप्रकाश चिन्मात्रः स्वकृतपूर्वकल्पीय क्रमवन्तं वेदराशि तदर्थांश्च युगपत् जानन्नेव करोतीति न वेदस्य कर्ता । अत्र करोतेः "धातूनामनेकार्थत्वात्" स्मर्तृत्वमेव । यत्र हि "अर्थं बुद्धा शब्दरचना" इति लौकिक न्यायानुसारेण अर्थज्ञानपूर्वकं वाक्यज्ञानं वाक्यस्पृष्टौ कारणं तत्रैव पौरुषेयता । अत्र तु यौगपद्यान्न सा ।

वेदस्य पौरुषेयत्व शंका निरासार्थं "अप्रयत्नेन" इति अप्रयत्नैव लीलान्यायेन पुरुषनिश्श्वयासवत्" इति रत्नप्रभायां शाङ्करीये च "अस्य महतो भूतस्य निश्श्वसितं एतत् यदृग्वेद:" इति श्रुते: निश्वसितपदार्थं तया विवृतत्वात्। ईश्वरस्य वेदस्य अपौरुषेयनित्यत्वं निगदितम्।

वेदोऽनादि: शिवस्तस्य व्यञ्जक: परमार्थत:।
अभिव्यक्तिमपेक्ष्यैव प्रणेतेत्युच्यते बुधै: ॥

इति यज्ञवैभवखण्डे अनश्वरस्य ईश्वरस्य वेदाभिव्यञ्जकत्वोक्तेः न ईश्वर: कर्ता वेदस्य। अतः नित्यापौरुषयो वेदेश्वरौ इति।





## गान्धीकथा

— विद्वान् बालगणपतिभट्टः, श्रीरङ्गपत्तनम्।

'दक्षिण आफ्रिका'वलये वर्णविद्वेष आत्मनो महत्तमस्थानं प्राप्त आसीत्। प्राय: तत्रत्या स्समेऽप्यांग्लराष्ट्रीय लोहिताङ्गा भारतीयान् कृष्णवर्णा इति नीच मनुषन्दधते स्म। तत्र वसतां भारतीयानां सर्वत्राऽपि जीवननिर्वाह एव दुर्भर आसीत् एतेन।

अस्मिन्नेवाऽवसरे महात्मा गान्धीमहाभाग स्तद्भूवलयं प्रापाऽऽत्मन उद्योगनिमित्तम्।

एकदा महात्मा केशवपनार्थं कस्य चन आंग्लनापितस्यायुष्कर्मशाला मगच्छत्। स तु दिवाकीर्तिः असितवर्णीयस्य भारतीयस्य मुण्डनं कर्तुं नाऽऽसीत्सिद्धः। अतः गान्धीसहोदयं बहिः प्रेषयमास, आत्मन स्संकल्पं उक्त्वा।

एतं व्यवहारं सोढु मसमर्थः मोहनदासः स्वयमेवायत्यामात्मनः केशान् कर्तयितुं सङ्कल्पितवानभवत्। तदनुकूलमेकं 'क्लिप्पर्'यन्त्र (कर्तनयन्त्रं) मक्रीणात्।

यन्त्रं तमुपयुज्य यथाकथञ्चित् केशकर्तनानन्तरं, स्नात्वा परिधानान्यर्हाणि धृत्वा न्यायालयं जगाम यथा नियमम्।

"भोः! किमिदमद्भुतं "अपि सन्ति ते वासगृहे मूषकाः? वयं भावयामः, ह्यः रात्रौ आखवः तैलसिक्तान् केशान् ते अखण्डयन्" इति।

सहोद्योगि - वावकीलानां सोल्लुण्ठनोक्तीः श्रुत्वा वस्तुस्थितिं तेषां मित्राणां सम्मुखे सुस्पष्ट मवदत् महात्मा।

तदा न्यायवादिनस्ते दृढं निश्चितवन्तोऽय मवश्यं दृढसङ्कल्पो भारतीय इति॥






# श्रीरामचरितम्

— राणि शिवशङ्करशर्मा, मोडेकुर्‌रु ।

निशाचर विनाशाय, दुष्टसंहरणाय च ।
शिष्टसंरक्षणार्थाय, रूपवन्त मजं भजे ॥ १

राज दशरथो नाम, त्रिकळत्र समन्वितः ।
चकार पुत्रकामेष्टि मनपत्यत्ववारिणीम् ॥ २

विस्फुटानलसंभूत दिव्यतेज स्समन्वितः ।
प्राजापत्यपुमां स्तुष्टः क्षीरान्नकलशं ददौ ॥ ३

तद्गृहीत्वा नृपो दारान् तोषयामास सन्ततम् ।
सुषुवु स्सुकुमारां स्ताः शुभलक्षण संयुतान् ॥ ४

श्रीरामं लक्ष्मणं चैव शत्रुघ्नं भरतं तथा ।
चकाराऽन्वर्थनामानि वसिष्ठऋषिपुङ्गवः ॥ ५

पुत्रा बुद्धिबलं प्राप्य सर्वविद्याविशारदाः ।
सर्वशास्त्रधुरीणाश्च विद्यासंपूर्णतां ययुः ॥ ६

दानवध्वंसितं यागं रक्षितुं रघुनन्दनम् ।
ययाचे कौशिकः प्राप्य राजानं सत्यसन्धिनम् ॥ ७

तदा दुःखसमायुक्तः पुत्रप्रेम समन्वितः ।
वसिष्ठप्रेरितो राजा प्रेषयामास राघवम् ॥ ८

राघव स्ताटकां हत्वा मारीचं बाणपीडितम् ।
सुबाहुं प्राणरहितं शिलां स्त्रीरूपधारिणीम् ॥ ९

कृत्वा स पत्तनं गत्वा छित्वा शैव धनुस्ततः ।
सीता मुद्वाह्यं रंभोरूं सोदरा नूर्मिळादिभिः ॥ १०

धर्मपत्नीसमेतांश्च भार्गवं दर्पमर्दितम् ।
कृत्वाऽयोध्यां ययौ रामः जानक्यार्ऽपित मानसः ॥ ११

रामपट्टाभिषेकार्थं मणिमालाविभूषितः ।
पुष्पगुच्छ विकीर्णश्च ग्रामः स्वर्गसमं बभौ ॥ १२

नृपं ययाच कैकेयी मन्थरा-प्रेरिता तदा ।
रामारण्याभिगमनं भरतस्याऽभिषेचनम् ॥ १३

राघवो दण्डकारण्यं सीतालक्ष्मण संयुतः ।
ययौ रक्षो-गणोपेतं मृगपक्षि-समन्वितम् ॥ १४

राजा कुमारशोकेन जगाम सुरपत्तनम् ।
निनिन्द कैकयीं दुष्टां भरतो भ्रातृ वत्सलः ॥ १५

कन्दमूलफलान्यशनन्नास्ते रघुकुलोत्तमः ।
मुग्धा राक्षस्य रूपेण दशकण्ठसहोदरी ॥ १६

अगच्छद्रामनिकटं सुन्दराकार संयुता ।
रामेण वारितोद्युक्ता हन्तुं सीतां भयङ्करी ॥ १७

तद्दृष्ट्वा लक्ष्मणः क्रुद्धः खड्गेनाऽऽच्छिद्य राक्षसीम् ।
नासिकाकर्णरहितां चकार रघुनन्दनः ॥ १८

तद्ज्ञात्वा पंक्तिकण्ठस्तु क्रुद्धो मारीचराक्षसम् ।
काचनं प्रेषयामास मृगरूप समन्वितम् ॥ १९

सुवर्णवर्णं सारङ्गं पियेष जनकात्मजा ।
बाणेनाऽताडयद्धावन् रामो मायामृगं तदा ॥ २०

परलोकाय गच्छन्सन् मायागुण समन्वितः ।
आक्रोशद्रामकण्ठेन सीतालक्ष्मण दुःखदः ॥ २१

अगच्छल्लक्ष्मणो भीतः रावणो योगिवेषतः ।
सीतां नयति लङ्केशो भुवमुद्धृत्य पत्तनम् ॥ २२

धर्मपत्नी विहीनस्तु लक्ष्मणेन समन्वितः ।
शबरी दत्तभोज्यानि खादन् पर्वतवासिनम् ॥ २३

कबन्धप्रेरितो रामः सुग्रीवं वालिपीडितम् ।
प्रत्यगच्छत्फलैः कन्दैः भावितो रघुनन्दनः ॥ २४

निनाय वालिनं स्वर्गं वृक्षप्रच्छन्नराघवः ।
हनूमानब्धिमुल्लङ्घ्य सीता चूडामणिं ददौ ॥ २५

कपिसैन्यं महाधीरं पाषाणै स्सेतुबन्धनम् ।
कृत्वा विभीणोपेत मतरत्सागरं ततः ॥ २६

रामबाणाग्नि विच्छिन्न रक्षोगणशिरश्शता ।
रक्तप्रवाहसंयुक्ता युद्धभूमि विराजते ॥ २७

कुम्भकर्णस्तु रामेण निहतः कपिघातकः ।
इन्द्रजित् चिरकालेन निहतो लक्ष्मणेन च ॥ २८

रावणोदरकुम्भन्तु छित्वा स रघुनन्दनः ।
निशाचर कुलश्रेष्ठ मभिषिच्य विभीषणम् ॥ २९

साकेते सोऽभिषिक्तश्च भार्या रत्नसमन्वितः ।
शङ्करेण कृतं काव्यं लक्ष्मीनाराणार्पितम् ॥ ३०



# स्वप्नोऽपि यदि सत्यः स्यात्

— ना. ब. निगमान्तः, प्रोद्दुटूरु ।

ग्रीष्मकालः सः । शिरोविदारके आतपे हनूमल्लांगूलदीर्घे पंक्तिक्रमे (२) घण्टाचतुष्कं स्थित्वा सर्वकारीय न्यायविक्रयशालातः शर्करातण्डुलगोधूमान् कथञ्चित् क्रीत्वा अतीव श्रान्तस्सन्नहं तान् गृहे निक्षिप्य कञ्चुकमपनीय, शिथिलेन — काण्ड रहितेन केनचन तालवृन्तेन वीजयन् मद्गृहद्वारसमीपस्थितायां वेदिकायां उपविशन्नभूवम् । समयं प्रतीक्षमाणः कार्यसाधनपटुः चतुर्हायणः मदन्तिमपुत्रः झटिति मदन्तिकमागत्य, तात ! विपणिं गत्वा त्वया प्रतिनिवृत्तं किल ? मद्भक्षणाय किमानीतम् ? देहि शीघ्रमिति असकृत् पृच्छन् मदङ्गं वेगेन चालयामास । संसारभरजातां दुःस्थितिं मदीयां स किं जानाति ? सद्योजातकोपस्फुरिताधरोऽहं तं प्रथमं व्यजनेन पश्चात् हस्तेन च ताडयन्, रे धूर्त ! मदग्रे मा तिष्ठ ! नो चेत् अद्यैव त्वां मारयामि धाव द्रुतम् ! इति कटु व्यनिन्दम् । सोऽपि मत्तो लब्धान् आकस्मिकान् प्रहारान् सोढु मशक्तः रुदन्नेव स्वमात्रे निवेदयितु मन्तरगात् । पुत्रवात्सल्यनिर्भरा मे गृहिणी तनयमुखात्सर्वं निशम्य क्रुद्धा अपरेव काळी मत्पुरतः प्रादुरासीत्; मार्मचितुं च प्रारभत । कुटुम्बभरणाशक्तस्य भवादृशस्य भार्यापुत्रादयः किमावश्यकाः? यद्यस्माभिः महान् असह्यश्च श्रमः तर्हि अस्मान्सर्वानपि कुत्रापि जीर्णकूपे पातयित्वा एकाकी सुखं अनुभवतु; निरपराधी बालकः किमर्थं ताड्यते? मनुजस्य क्षमा आवश्यकी । भवादृशः पुरुषविशेषः न कदापि श्रुतः, न कुत्रापि दृष्टः । मत्पिता मां तथा

प्रवर्ध्य अन्ते भवते दत्तवान् । कदा मया सुख मनुभूतम्? सर्वथा इयमेव स्थितिः इति । एवं कथयन्ती सा अमोघं तदीयं अश्रुरूपं ब्रह्मास्त्रं मयि प्रयुज्य पुत्रमालिङ्ग्य गृहं प्राविशत् । अभीष्ट कार्यसिद्धेः आतपसञ्चाराच्च जात शारीरिकी व्यथा एकत्र । पृथुकुटुम्बभरणासामर्थ्यात् जाता मानसिकी व्यथा अपरत्र । दुस्तरयो रेतयो र्मध्ये दैवेन निक्षिप्तोऽहं एकाकी किं कुर्याम्?

सदाचारनिर्मले वैदिके कुले जातोऽहम् । मम पिता कश्चन प्रथितः पुरोहितः । ग्रामे तत्र तत्र गत्वा विवाहादिकं कारयन् तल्लब्धेन स्वल्पेनैव धनेन कुटुम्बं पुष्णाति स्म । मन्माता अतीव श्रान्ता । गृहस्थितिं स्वकीयां कदापि न बहिः प्रकटयामास । न कामपि किमप्ययाचत । अन्नसत्वे भोजनं, तदभावे उपवास इत्येतत्तदीयं व्रतम् । तयोरहं एक एव पुत्रः । घोरे दारिद्र्येऽपि मदभिलषितं पूरयन्ती मां अन्यादृशेन पुत्रवात्सल्येनापुषत् । एवं स्थिते, काले अक्षराभ्यासमहोत्सवः निर्वर्तितः मत्कृते । प्रथमं पाठशालां प्रविष्टस्य मन्दभाग्यस्य मम लक्ष्मीः कटाक्ष इव भारतीकटाक्षोऽपि लेशतः नाऽभूत् । इयं वैदिकवृत्तिमदवसाना भवतु, मत्पुत्रः कालानुगुणं आंग्लविद्या मभ्यस्य, महत्सुकार्यालयेषु उन्नतपदवीप्राप्त्या सुखी अस्तु" इत्येतादृशेन उन्नतेन विशालेन चाशयेन मां अध्यापयति स्म मत्पिता । अहन्तु विद्याविरोधिभिः अलसैः कैश्चन बालकैः सह सततं परिभ्रमन्, पाठशालां अनवाप्य, यत्र कुत्रापि क्रीडित्वा, भोजनकाले गृहं आगच्छन्नासम् । एवं अनेकानि दिनानि व्यतीतानि । मदार्थश्च प्रथमं सामोक्तिभिः, पश्चात् दण्डोपायेन च भर्त्सयन् मां विद्यावन्तं कर्तुं बहु प्रायतत । परन्तु पराजय एव समजनि तस्य । अतः दुःखितस्सन् स मदाचरितं कदाचित् मत्पित्रे न्यवेदयत् । उदन्तमिमं

[7]

निशम्य मज्जनकः स्वाशयं आकाशकुसुमसदृशं मन्वानः, अत एव खिन्नः, रहसि मा माहूय तात! अलं विद्याभ्यासेन। सरस्वती-प्रसादानर्हः त्वमिति ज्ञातमिदानीमेव। त्वद्भागधेयं तावदेव। किमहं कुर्याम्? अतः श्वःप्रभृति गृहे पौरोहित्यविषयकाः मन्त्राः तन्त्राणि च मयैव बोधिष्यन्ते, जागरूकस्सन् गृह्णीष्व, नान्या गतिः तवेति सगद्गदं अवदत्। अथ पितु रनुग्रहात् कालेऽहमपि कश्चन पुरोहितः संवृत्तः। प्रतिग्रामं गत्वा पौरोहित्य मकार्षम्। अत्राऽन्तरे मद्विवाहोऽपि प्रचलितः। एवं महान् कालो गतः। मन्माता-पितरौ लोकान्तर मलञ्चक्रतुः। अहमपि ग्रामं तं परित्यज्य भूरि धनार्जनेच्छुः सभार्यः नगरमिदं प्रथमं प्राविशम्। अयं नगरप्रवेशः मत्कृतो नूतनः। एतादृशं महानगरं मम अदृष्टपूर्वम्। अतः कुत्र वासः कर्तव्यः? कथं वृत्तिः सम्पाद्या? अत्रत्याः सकला अप्यपरिचिताः। इति चिन्तयन् धूमशकटालये तिष्ठन्नभूवम्। महानगर्यां तत्र मां कोऽसौ पश्यति? को वा भाषते? सर्वेऽपि यन्त्र-सदृशाः स्वार्थं साधयितुं धावन्ति स्म। इति कर्तव्यतामूढः तत्रैव दिनत्रयं कथञ्चि दत्यवाहयम्। मद्धस्तस्थितानि रूप्यकाणि च क्रमेण व्ययितान्यभूवन्। क्षुच्छोकपीडितोऽहं पितरौ स्मारं स्मारं मनस्येवारोदिषम्। बाल्ये यदि विद्या सम्यगभ्यस्ता स्यात्, इयं दुरवस्था न भवेत्किल? मया कालः वृथा अपनीतः इति पश्चा-त्तप्तश्चाऽभवम्। मद्भार्याऽपि न किमपि वक्तुमक्षमा शीतग्रस्ता इवेव स्तम्भमूले शरीरं संकुच्य अशेत। एवं स्थिते दैवानुग्रहात् कश्चन विप्रः द्विचक्रयानोपविष्टः दर्भादीनि यानपृष्ठे निक्षिप्य तेन मार्गेणाऽऽगच्छत्। नानाविधयानादिभिः निर्भरां जनसन्दोह-मण्डितां नगररथ्यां यत्नेनोल्लङ्घ्य तमाह्वयम्। सोऽपि याना-दवतीर्य मत्सविधमागत्य, मां आपादमस्तकं सम्यक् वीक्षमाणः, सोदर! नूतन इव दृश्यसे, कस्मादागम्यते? इति सानुकम्पं अपृच्छत्।

एव मुक्तोऽहमपि मद्वृत्तान्तं कृत्स्नमपि तस्मै आवेदयम्। सोऽवदत् – अहमपि कश्चन पुरोहित एव। विंशतिवर्षेभ्यः पूर्वं अत्राऽऽगच्छम्। तदा प्रभृति वैदिकवृत्तिं आश्रित्यैव वसामि मद्गृहन्तु समीपे वर्तते। मया सह युवां तत्रागच्छतम्। कर्तव्यमहमनन्तरं निवेदयिष्यामि इति। तथेत्यावां तेन सह गत्वा तद्गृहं प्रापाव। तत् अतिप्राचीनं नातिविशालं च गृहम्। जलक्षरणात् कुडयचानि तत्र तत्र जीर्णानि निम्नोन्नतानि सरन्ध्राणि च व्यराजन्त। सुधादीनां पतनात् पक्वेष्ठकाः नेत्रगोचराः गृहीयं पुरातनत्वं प्रकटयन्ति स्म। गृहोपरिनिर्मिता छदिः शिथिलाऽलक्ष्यत। गृहमध्यस्थे अङ्गणे कश्चन कूपः। तत्रत्याः सर्वेऽपि तस्मादेव जलमुद्धरन्ति स्म। गृहान्तस्थलन्तु मृण्मयत्वात् धूलीपटलव्याप्तमभूत्। तत्र गृहे अनेकेऽपवरकः। तेष्वन्यतमः एतदीयः। प्रत्यपवरकं द्वत्रः कुटुम्बिनो न्यवसन्। अत्युन्नतभवनावली विराजिते नगरेऽस्मिन् एतादृशं वेश्म केन कदा कथं निर्मितम्? खनकवृश्चिकादिवासयोग्ये अत्र एते कथं भार्यापुत्रादिभिः निश्चिन्तं निवसन्ति? एवं विधे स्थले अस्माभिः कथं वासः कर्तुं शक्यते? इत्येवं बहुचिन्तयन्तं मां सोऽयं सुहृत् मद्धस्त माकृष्य स्वापवरकं प्रावेशयत्। नूतनतया आगतौ आवां तद्गृहिणी च यथाशक्त्युपचर्य हितोक्तिभिः सान्त्वयामास। तदाप्रभृत्यावयोः तथैव वासोऽभूत्। परेद्युः स्वविदितानां द्वित्रिप्रमुखानां परिचयं च मे कल्पयामास सः। तेन साकमहमपि तत्र तत्र गत्वा विवाहादिकं निरवर्तयम्। कालचक्रं वेगेन भ्रमति स्म। संप्रत्यहं एतन्नगरे प्रधानः सकलविदितः पुरोहितः। नगरे यत्र कुत्राऽपि विवाहः श्राद्धादिकं वा यदि प्रचलेत्, तत्र ध्रुवं मत्सान्निध्यं स्यात्।

[ अनुवर्तते ]



# श्रीमध्वाचार्यः

[पूर्वानुबन्धः]

सत्यतीर्थः-आम्! सत्यमुक्तं प्रभो! एतत्साह्येनैव अस्मदाचार्यः अद्वैतपण्डितान् वादे जयति ।

राजा- किं भवदाचार्यः अस्मद्गुरोः त्रिविक्रमपण्डिता दधिकः?

सत्य - को वाऽधिक इत्येतत्तु वादे विदितं भवेत् ।

तच्छ्रुत्वा राजा आचार्यस्य आह्वानं प्रैषयत् । आचार्यस्य त्रिविक्रम पण्डितस्य च अष्टौ दिनानि वाद-प्रतिवादाः प्रवृत्ताः । अन्ते "सत्यं भिदा - सत्यं भिदा" इति सिद्धान्तित माचार्येण । वादे विजितः त्रिविक्रमपण्डितः श्रीमध्वाचार्यस्य साष्टाङ्गप्रणामं विधाय "भवदीय शिष्यपरमाणुत्वेन मां परिगृह्णीष्वे"ति प्रार्थयामास । राजाऽपि जयसिंहः आचार्यं सबहुमानं संभावयामास ।

एवं अद्वैतपण्डिताः एकैकशः द्वैतमत मङ्गीकुर्वन्त आसन् । द्वैतमतवैभवं दिनदिनप्रवर्धमानं आसीत् । मध्वाचार्यः वैष्णवमुख्यपुराणस्य भागवतस्य "भागवततात्पर्यं" नाम व्याख्यान मकरोत् । एवं "महाभारततात्पर्यनिर्णयो" नाम ग्रन्थोऽपि रचितस्तेन । नैतावन्मात्रं, आचार्यः ऋग्वेदस्य भाष्यं रचयामास; बहूनि च स्तोत्राणि विरचितवान्; आहत्य सप्तत्रिंश त्संख्याकान् (३७) ग्रन्थान् विरच्य द्वैतमतं स्थापयामास; पद्मनाभादि शिष्यान् देशे देशे च संप्रेष्य द्वैतमतं व्यापयामास ।

आचार्य: द्वितीयवारमपि उत्तरदेशयात्रार्थं गत:। तदाऽन्त: कलहेन देशे राजकीय: कल्लोल: प्रवृद्ध आसीत्; देशाद्देशगमने महान् क्लेशोऽनुभूत:। गंगातीरे शिष्यैस्सह नदीतरणाय अनुमति-पत्रं पृष्ट: आचार्य स्तत्रत्यै र्भटै:। तत्कुत्र वा लभ्यते इत्येतत्तु नैव कथितं तै:। अत: आचार्य: शिष्यैस्सह गङ्गातीरे किञ्चिद्दूरं उपरिष्टाद्गत्वा पाणिभ्यां पादाभ्यामेव नदीतरण मारेभे। यद्यपि सशिष्य: आचार्य: पारंगत:; तथाऽपि तत्तीरस्थै: भटै: निरुद्धो राजसमीपं प्रापित:। राजा नवाब: उर्दूभाषायां "को भवान् कुत: समागत:, अनुमतिपत्रं विना गंगानदीतरणं कुत: कृत" मित्यादिक मपृच्छत्। आचार्योऽपि उर्दूभाषायां स्वकीयं पाण्डित्यं प्रदर्शयन् सदुत्तराणि दत्वा नवाबं तोषयामास। आचार्यस्य सौजन्यं परभाषावैदुष्यं च विज्ञाय सन्तुष्टो नवाब: अनुमति-पत्रं प्रदाय सम्भावयामास। एवं उत्तरदेशे पुन: स्वमतव्याप्ति कुर्वन् आचार्य: पश्चिमतीरे "गोवा" प्रदेशमपि गत्वा उडुपि-क्षेत्रं पुनरागत:।

आचार्यस्य षष्टयब्दपूर्तिरप्यासीत्। कश्चिद्राजाऽऽचार्यं समेत्य यज्ञविधानायाऽवृणोत्। प्राणिहिंसा न कर्तव्येति प्रबोध्य पिष्ट पशुभिरेव यागपूर्तिं कारयामास।

पाजकग्रामे जननीजनकयो र्देहावसानानन्तरं गृहस्थधर्मं निर्वहन् कनिष्ठसोदर: गृह-भू-भाग्यादिनाशात् अन्ते आचार्यं शरण मगात्। "कदाचिदहं गृहत्यागी" त्वमिदानीं गृहत्यक्त: उभावप्यावां सोदरौ समानौ स्व:, इति वदन्नाचार्य: भ्रात्रे सन्यास-दीक्षाप्रदानपुरस्सरं द्वैतमते सहभागं दत्वा "विष्णुतीर्थं" इति नाम चकार।

[ 8 ]

(८) चरमदशा —

आचार्यः उडिपि-क्षेत्रे श्रीकृष्णविग्रहं प्रतिष्ठाप्य देवालय-निर्माणं कारयामास । ज्येष्ठयति - सत्यतीर्थादीन् अष्टौ शिष्यान् तस्य देवालयस्य धर्मकर्तृन् न्ययुंक्त । अनन्तेश्वरमठस्य पद्मनाभतीर्थं अधिपति मकार्षीत् ।

नरहरितीर्थः - "स्वामिन् ! एतादृशी व्यवस्था इदानीमेव कुतः क्रियत" इत्यपृच्छत् ।

आचार्योऽवदत् - "मदीयागमनकार्य मवसित" मिति । तच्छ्रुत्वा शिष्या विषण्णवदना भूत्वा "हा! आचार्यः अस्मान्विहाय गमिष्यती"ति विलपितु मारेभिरे ।

आचार्यं ससस्मित स्सन् "सर्वं विज्ञाय यतिभावं प्राप्य पामरा इव यूयं अविद्यावृता विलपथ किमर्थम् ? भगवद्गीता विस्मृता किं नु? "वासांसि जीर्णानि यथा विहाय नवानि गृह्णाति नरोऽपराणि । तथा शरीराणि विहाय जीर्णान्यन्यानि गृह्णाति नवानि देही" इत्याह ।

कालो गतः । ऊनाशीतिवर्षदेशीय स्संवृत्तः आचार्यः । कस्यां चित्पूर्णिमायां चन्द्रोपरागकाले शिष्यै स्साकं आचार्यः समुद्र-स्नानार्थं गतः ।

आचार्यः स्नातः जलमध्ये स्थित्वा ध्याननिमग्नो बभूव । उपर्युपरि तरंगा उद्गता आचार्यं पुरः पश्चात् प्रकम्पयन्तः ध्यान-भङ्ग मकुर्वन् । आचार्यः चक्षुषी उन्मील्य तीक्ष्णदृक्पातेन समुद्रं न्यशामयत् । क्षुब्धः सागरः निस्तरङ्गप्रकम्पः कासार इव निश्चल आसीत् आचार्यकोपेन सागरे तरङ्गप्रकोपः प्रशान्तः । शिष्याः आश्चर्यान्विता अभवन् ।

वत्सा:! जीवात्मन: मानसेऽपि समुद्र इव तरंगा: उत्पद्यन्ते। चित्तवृत्तिभि: मनस्संक्षोभ: विजृम्भते। साधनेनैव जीव: चित्तं निश्चलं कुर्यात्। निवातप्रदेशे यथा ज्योतिर्निश्चलं प्रकाशते, तथा निश्चलचित्ते हरि: स्थिरो भवति" इत्याचार्य: शिष्यानुपदिदेश।

सैकतस्थलं प्राप्य आचार्य: शिष्याश्च नेत्रे निमील्य ध्याननिमग्ना आसन्। शिष्या: नेत्राण्युन्मील्य यदाऽपश्यन्, तदा पूर्वं स्व मध्ये समुपविष्ट: आचार्य: अदृश्यतां गत:। तत्स्थाने पुष्पराशि रदृश्यत।

केचिच्छिष्या: अचार्यमन्वेष्टुं इतस्ततो गता:। पद्मनाभतीर्थ: विषण्णवदनेन "इत: परं आचार्य: कथं लभ्येत? तस्य महात्मन: अवतार स्समाप्त:" इति सबाष्पगद्गद माह।

(९) सन्देश - संग्रह: —

बाल्ये पितृभ्यां "वासुदेव" इति कृतनामा, स्वाचार्येण अच्युतप्रेक्षेण "पूर्णप्रज्ञ" इति प्रथित:, सन्यासाश्रमे "आनन्दतीर्थ" इति प्राप्तनामधेय:, पण्डितप्रकाण्डै: वायुदेवांशेनाऽवतीर्ण: "मध्व" नामाऽचार्य: अयमेवेति प्रख्यापित:, द्वैतमतप्रवर्तक: श्रीमध्वाचार्य: प्रस्थानत्रयस्य भाष्याणि विरच्य अद्वैतसिद्धान्तं निरस्य द्वैतमतसिद्धान्तं स्थापयामास।

श्रीमध्वाचार्य मतानुसारेण "ब्रह्मेव जगदपि सत्यं जीवब्रह्मणो रभेदो नास्ति, भेद एव। प्रस्थानत्रय प्रतिपादितं परं ब्रह्म हेयगुणरहित: अनन्तकल्याणगुण परिपूर्ण: हरिरेव मोक्षप्रदत्वेन आराधनीय:। जीवब्रह्मणोरिव, जगद्ब्रह्मणो:, जगज्जीवयो:,

जीवानां परस्परं, जगद्गतानां पदार्थानां च परस्परं भेदोऽस्तीति पञ्चभेदसिद्धान्तः प्रसिद्धः। जीवाः सात्त्विकाः नित्यसंसारिणः, तमोयोग्या इति त्रिविधाः। जीवा हरे र्दासभूताः स्वस्वयोग्यतानुसारेण मोक्ष मर्हन्ति। जीवस्य अज्ञानं द्विविधं भवति। स्वस्वरूपज्ञानविरोधि "जीवाच्छादक" मिति परब्रह्मस्वरूपज्ञानविरोधि "परमाच्छादक" मिति कथ्यते। हरे रनुग्रहेणैव जीवः ज्ञानाद्वन्धविमुक्तस्थान् मोक्षसाम्राज्य मर्हति। अतो जीवः हरे रनुग्रहाय साधनमार्ग मनुसरेत्। अस्मिन् मार्गे शमदमवैराग्यप्रभृतीनि अष्टादशसोपानानि सन्ति। एतन्मार्गे सोपानान्यधितिष्ठतः जीवस्य नित्यानित्यविवेकोद्भवेन विषयसौख्ये वैराग्योत्पत्त्या च परब्रह्मणि मनो लग्नं भवति। जीवानां योग्यता तारतम्यानुसारेण मोक्षे आनन्दः सिद्धयति। भगवान् यद्यपि दयालुः, तथाऽपि पापिनो दण्डयति। वेदविहितोऽपि यज्ञयागादिः प्राणिहिंसां वर्जयित्वा पिष्टपशुभिः पूरणीयः। निवातप्रदेशे ज्योतिरिव निश्चलचित्ते हरिः स्थिरो भवति।

"सत्यं भिदा सत्यं भिदे"ति द्वैतमतसारांशः। अर्थात् — जीवब्रह्मणोर्भेद एव नाऽभेदः इति भावः। अभेदः अद्वैतमिति भेदः द्वैतमिति चोच्यते। इमं भावं सूचयितुमेव मध्वाचार्यः दक्षिणहस्ते द्वे अंगुली प्रसार्य अवशिष्टानाकुञ्च्य प्रदर्शयामास। एवमेवाऽयं भेदः मन्मते (द्वैतमते) पञ्चविध इति सूचयितुं प्रसारित पञ्चांगुलिकं हस्तं प्रदर्शयामास। एवं भेदमुद्रां द्विविधां प्रदर्श्य श्रीमध्वाचार्यः स्वीयं द्वैतमतं स्थापयामास।

श्रीकृष्णार्पणमस्तु



# FORM IV

*(See Rule 8)*

| | |
|---|---|
| Place of publication | SamskrithaBhasha Pracharini Sabha, Chittoor 517001 |
| Periodicity of its publication | Monthly |
| Printer's Name | K. V. Raghavan (in-charge) |
| Whether citizen of India | Yes |
| If Foreigner, State the country of origin | —— |
| Address | Vijaya Press, Chittoor. 517001 |
| Publisher's Name | N. Ramanatha Aiyar, B A. B L. |
| Whether citizen of Indin | Yes |
| If Foreigner, State the country of origin | —— |
| Address | N. Ramanatha Aiyar B.A B.L 17–4–7, Sundara Iyer St., Chittoor 517001 |
| Editor's Name | M. Varadarjam Panthulu |
| Whether citizen of India | Yes |
| If Foreigner, State the country of origin | —— |
| Address | C/o Vijaya Press. Janda Street, Chittcor 517001 |
| Name and Addresses of individuals who own the news paper and partners or Shareholders holding more than one per cent of total capital. | Samskritha Basha Pracharini Sabha, Chittoor 517001. |

I, Ramanatha Aiyar hereby declare that the particulars given above are true to the best of my knowledge and belief.

Chittoor,
15—3—78.

(Sd.) **N. Ramanatha Aiyer,** B.A. B.L.
*Signature of publisher,*

Please mention your membership Number for easy correspondence.

R. N. 1845/60. Postal C. T. R. 11.

भारतसर्वकारेणानुमोदिता R. C. No.27-A 3/65 Dated 14-7-'65

Licensed to Post without Prepayment. LICENCE No. 1



# गैर्वाणी



To

1008. The Editor,
Gurukula Patrika,
Gurukula,
Kangedi Viswa Vidyalaya,
Haridwar.

If undelivered please return to
Sanskrit Bhasha Pracharini Sabha, Chittoor A. P.

Published by Sri N. Ramanatha Aiyar, B.A., B.L., Advocate & Secretary,
S. B. P. Sabha, Chittoor. (A. P.)
Printed by Sri K. V. Raghavan (in-charge)
at Vijaya Press, Chittoor. (A. P.) C. 1500.

वाणीं भजत गैर्वाणीम्!

# गैर्वाणी

मासिको पत्रिका



संपुटः १६ | APRIL 1978 | क्रमांकः ४



कालयुक्ति चैत्राङ्कः | शकाब्दाः 1900 | मूल्यम् ०-५० पैसाः

# विषयसूचिका









# श्रीनिवासप्रार्थनात्रयम्

— एस्. वेणुगोपालाचार्यः,
संस्कृत पि. ओ. एल्., शिक्षाशास्त्री।

शेषाचलोपरिनिवासित चिद्विलासं,
संसारघोरजलधिं परिलंघनार्थम् ।
पादारविन्दयुगलं प्रणतोऽस्मि नित्यं,
श्रीश्रीनिवास मम देहि करावलम्बम् ॥ १

बृन्दारकादिमुनिभिः तवदिव्यशक्ति,
ज्ञातुं कृतं जपतपांस्यपि नीतिमार्गैः ।
मूढात्मनो मम न शक्यते तत्स्वरूपं,
श्रीश्रीनिवास मम देहि करावलम्बम् ॥ २

चन्द्रार्ककोटि बहुकान्तिमयं च रूपं,
मन्दारचम्पक सुमार्चित देवदेवम् ।
ध्यानेन पापतिमिरस्य निवारकारिन्,
श्रीश्रीनिवास मम देहि करावलम्बम् ॥ ३





# गैर्वाणी

१५–४–१९७८ * कालयुक्ति चैत्राङ्कः

## श्रीमाडभूषि अनन्तशयनमय्यंगार् दिवंगतः

लोकसभायाः भूतपूर्व सभापतिः, बीहारराज्यस्य भूतपूर्व राज्यपालः संस्कृतभाषाप्रचारिण्याः सभायाः चित्तूरु नगरस्थायाः भूतपूर्वाध्यक्षश्च श्री माडभूषि अनन्तशयनमय्यङ्गार् महोदयः १९–३–७८ भानुवासरे सायं परमपदं गत इति वार्ता न केवलं संस्कृतज्ञानां



संस्कृताभिमानिनां च, अपि तु अशेष संसदीय परिषद्यानां विषाद मापादयति स्म ।

## जीवनलीला

जन्म-स्थल-कालौ —

श्री अय्यंगार् महोदयः तिरुपतिसमीपे तिरुचानूरु नामके पुण्यक्षेत्रे ४–२–१८९१ तमे दिनाङ्के जन्म लेभे। श्रीवेङ्कटेश्वरोन्नतपाठशालायां विद्याभ्यासानन्तरं मद्रास् नगरे पच्चयप्प-कलाशालायां पट्टभद्रोऽभवत्। तत्रैव न्यायकलाशालायां डिग्री-विभूषित स्सन् श्रीदोरस्वामय्यङ्गार् नेतृत्वेन न्यायवादाभ्यासं प्रारभत।

राजनीतिक्षेत्रे —

भारतजातीयकांग्रेस्नायको भूत्वा द्विवारं कारागारवास मन्वभवत्। तिरुमल - तिरुपति - देवस्थान महन्त् - नामकस्य निरंकुशत्व-व्यतिरेकोद्यमे सफलीकृत कृत्य स्समभवत्। १९३२ तमे वर्षे मद्रास्राज्यशासनसभायाः तिरुमल - तिरुपति - देवस्थान शासनेन महन्त् सर्वाधिकारः राज्यसर्वकाराधीनोऽभवत्। श्री अय्यङ्गार्महोदयः कांग्रेस्संस्थायाः अभिवृद्ध्यै दृढतर दीक्षया प्रायतत। जस्टिस्पार्टी सुस्थिरावासभूते चित्तूरुमण्डले कांग्रेस्-पार्टी रूढमूला समभवदिति यत् तदीय श्रमफलित मेव तत्।

व्यक्तित्वम् —

अनन्तशयनमय्यङ्गार्महोदयस्य जीवनलीलाविशेषान् यदि परिशीलयेमः, तर्हि विलक्षणं तदीयं व्यक्तिवैशिष्ट्यं प्रस्फुटं भायात्। प्रजा - जीवन - क्षेत्रे सर्वेऽपि नायकाः प्रतिस्पर्धाविषयतां गता एव। ईर्ष्यासूयाद्वेषदौर्जन्यादिनिलये राजकीयक्षेत्रे निराटङ्कं निर्निरोधं जीवितयात्रां अकार्षुः श्री अय्यङ्गार्महोदयाः। न

कदाऽपि न कुत्राऽपि न कस्यामपि पदव्यां एते प्रत्यर्थितां गताः। प्रतिस्पर्धा पराजयावजानन्तः एते महाभागाः यथालाभ सन्तुष्टचा राजकीयाकाशे व्यराजन्त। निराडम्बर सनातन वेषभाषाभूषितोऽयं महान् सर्वजनसमादरणीयतां गतः इत्यत्र नैव संशयः! आन्ध्रोद्यमे जातीयोद्यमे च श्री अय्यङ्गार् महाभाग एव आसीत्।

**सेवाकालः —**

१९३४ तमा द्वर्षात् १९६२ तमवर्षपर्यन्तं केन्द्रशासनसभायाः (पार्लमेण्ट्) क्रमभङ्गं विना निर्वाचितानां स्वल्पसंख्याकानां लोकसाभासभ्यानां अय्यङ्गार्महोदयः अन्यतमः। स्वातन्त्र्योद्यमात्पूर्वं केन्द्रशासनसभायां स्व० जिन्ना, स्व० सत्यमूर्ति प्रभृतयो दिग्गजा बभूवुः। तादृशानां उन्नतश्रेणी सदस्यानां समक्षं चर्चासु अनर्गलोपन्यासं कुर्वन्त आसन्। संसदीय पारिषदानुभवः राज्यांग निर्माणपरिषदि एतेषा मत्यन्तोपयोगकारी संवृत्तः। भारत प्रथम लोकसभापतेः श्रीमौलङ्करमहोदयस्य निर्याणानन्तरं लोकसभापति स्थाने निर्वाचितः श्री अय्यङ्गार्महोदयः सभाकार्यक्रमान् अत्यन्तसामर्थ्येन निर्वहति स्म। राज्पालत्वेन बिहारप्रदेशे नियोगानन्तरं प्रादेशिकमन्त्रिवर्गनिर्माणसंबन्धे समुत्पन्नानां समस्यानां केन्द्रप्रभुत्वादेशान् तत्सन्देशान् वा अनपेक्षमाणस्सन् परिष्कार कुशलतां प्रदर्शयामास। एतादृशा राज्पाला विरला एव भवेयुः।

जातीयोद्यमवत् आन्ध्रोद्यमेऽप्येते समुद्युक्ताः। १९४० तमे वर्षे गुण्टूरुनगरे प्रवर्तितानां आन्ध्रमहासभा समावेशानां अय्यङ्गार्महोदयः आध्यक्ष्यं स्वीचक्रुः।

शान्तिरस्तु —

निराडम्बर वेष-भाषाविलसितस्य भारतीयसंस्कृतेः प्रतीकस्य, तिरुपतिनगरे केन्द्रीयविद्यापीठ-संस्थापकाध्यक्षस्य, त्यागधनस्य, निष्कळङ्क देशभक्तस्य, प्रजासेवया धन्यजीवितस्य, माडभूषि अनन्तशयनमय्यङ्गारार्यस्य स्वाचार्यंचरणं गतस्य श्रीमन्नारायणः परमपदं दद्या द्येन स पूतात्मा शाश्वतशान्ति लभेत ।

ॐ शान्ति श्शान्ति श्शान्तिः ! ! !

(आन्ध्रप्रभा सौजन्येन)



## सन्तापसभा समावेशः



२४–३–७८ भृगुवासरे सायं ६-०० घण्टासमये संस्कृतभाषाप्रचारिण्याः सभायाः भवने, दिवंगतस्य माडभूषि अनन्तशयनमय्यङ्गार्यस्य आत्मशान्त्यर्थं, संस्कृतसभासभ्या स्सर्वेऽपि समाविष्टाः । स्वर्गीय - अय्यङ्गार् - महोदयस्य सेवा-गुण-प्रशंसनानन्तरं मौनप्रार्थना मकुर्वन् ।

तदीय कुटुम्बसभ्यानां दुःखोपशान्ति प्रति स्वीय गाढसन्ताप - सहानुभूति - ज्ञापनार्थं प्रस्ताव मकार्षुः ।

# ऋतुचक्रम्

— ना. व. निगमान्तः, प्रोद्दुटूरु ।

लोके वसन्ताद्य ऋतूरुचक्रं भ्राम्यत्प्रकृत्या स्वसमयानुकूलम् ।
वृष्ट्या तपादीन्विविधान्विकारान् तत्कालचक्रेण करोति तुल्यम्।। १

चक्रे न वर्षं तुहिनं निदाघो भवेदृतूनां भ्रमिते सतीह ।
जना स्तदा नित्यतयाऽऽर्तिगाना स्यु स्तस्य शं संभवति भ्रमेस्तु।। २

तनुप्रवाहा कुसुमाढ्यवीरुधो नदी रसालाः फलनिर्भराः पिकाः ।
कलस्वना मन्दगति स्समीरणो वसन्तको भात्यलमेभिरङ्कितः ।। ३

प्रचण्डतापं च महानिलाञ्चितं दिनं सुदीर्घं मितवारि सत्सरः ।
शिरीषपुष्पं मृदु शोभते तरुच्छाया सुशीतलैरलंकृतस्तपाः ।। ४

तटिल्लसन्नीलवलाहकाऽनिलाः निकामशीता जलपूरितापगाः ।
निरन्तरा वृष्टि रिमानि सूचयन्त्यसंशयं प्रावृष मागतां क्षितौ । ५

बलाकपंक्ति विमलाम्बरे कृता सितश्शशी स्वच्छजलो जलाशयः ।
प्रफुल्लह्लानि निरभ्रमम्बरं प्रकाशतेऽमीभिरियं शरत्स्वयम् ।। ६

फलं बदर्या हिमशीतवायवः कदुष्णसूर्यांशु रपास्तपङ्कजम् ।
पचेलिमव्रीहिपिशङ्गभूततिः हिमर्तुरेतैः प्रविभाति लक्षणैः ।। ७

निशि प्रभूतोष्णजघर्मबिन्दवः सुशीततोयेषु विहर्तुकामना ।
प्रभातकाले तुहिनावृतिस्तरोः दलप्रपाताः शिशिरे भवन्ति च ।। ८



# वेदेषु उषस्समयः

मेडवरपु संपत्कुमार्,
साहित्य विद्याप्रवीणः, मण्डपेट।

ऋग्वेदे उषः काल देवतामुद्दिश्य अनेकानि सूक्तानि सन्ति। तानि सर्वाणि तत्कालस्थितानां आर्याणां आचारव्यवहारान् प्रकटयन्ति। अपि च तेभ्यः सूक्तेभ्यः तद्देशमपि ज्ञातुं शक्यते। दृश्यताम् —

"तानीदहानि बहुलान्यासन्, या प्राचीनमुदिता सूर्यस्य।
यतः परिजार इवाचरन्ति, उषोददृक्षे न पुनर्यतीव ॥"

ऋग्वेद VII मण्डलं 76-3 अस्या ऋचः व्याख्यानं कर्तुं भाष्यकाराः न सफलीभूताः आसन्। कुत इति चेत् पश्यन्तु — "अनेके दिवसाः सूर्योदयात्पूर्वं आसन्, हे उषः! एतैः दिवसैः स्साकं त्वं प्रियाय गमिष्यन्तीव दृश्यसे। प्रियं त्यक्ता गमिष्यन्ती स्त्री इव न दृश्यसे त्वम्।" अस्मिन् सूक्ते, उषस्समय अनेकानि दिनानि अभवन्निति वर्णितम्। तत् कथं संभवति? यत्र कुत्राऽपि उषस्समयः किञ्चित् कालमेव खलु, तर्हि इदं कथं संभवति? संभवत्येव यत्रक्वाऽपि। अस्मिन्देशे तु न। कुत्र? उत्तरध्रुवप्रान्ते संभवति। कथमितिचेत् — तत्र षण्मासाः एको दिवसः, षण्मासाः एका रात्रिः; अत एव तत्र उषस्समयः द्विमासपर्यन्तं अभवत्। तेन पूर्वोक्त - ऋचः भावं सम्यग्ज्ञातुं शक्यम्। तदेव न, अपरमपि अवलोकयन्तु —

"गवां अयनं" नाम कस्माच्चन क्रतोः आरभ्यमाणात् पूर्वं होत्रा सहस्रसंख्यापरिमितश्लोकाः प्रथमतः पठनीयः, तेषां सहस्रश्लोकानां मकुटं नाम. "अश्विनशास्त्र" मिति। अश्विनशस्त्रस्य अधिष्ठानदेवता उषः, होता मध्ये श्रमापनयनार्थं घृतं त्रिप्रकारं अग्नौ निधाय अनन्तरं स्वयमेव पास्यति। एतत्प्राक्रियायां समाप्ति प्राप्तायामपि अन्या प्रक्रिया विद्यते — ऐतरेयब्राह्मणे IV-7 आपस्तंबसूत्रे XIV-1-2 च इत्थमुक्तम्।

"यस्याश्विने शस्यमाने सूर्यो नाऽऽविर्भवति, सौर्यं बहुरूपमालभेत्। सर्वा अपि दाशतईरनुब्रूयात्।" "सूर्योदयात्पूर्वं पशुबलिरपि अर्पणीया। ऋग्वेदे दशमण्डलानि पठनीयनि।" तथाऽपि सूर्योदयो नाऽभवत्। तदा "तैत्तरीय संहितायाम् II-1-94" "असावादित्यो न व्यारोचत; तस्मै देवाः प्रायश्चित्तमैच्छन्" इति स्थितम्। महाभारतेऽपि वनपर्वणि १६४ तमे अध्याये, अर्जुनः मेरुपर्वतदर्शनसन्दर्भे, तेषां मेरुपर्वतवासिनां एको दिवसः एका रात्रिः मिलित्वा एको वत्सरो भवतीति सुस्पष्टमुक्तम्। अद्यापि उत्तरध्रुवप्रांतोपरितले सुवर्णरोचिषां समूहमिव भासमानं ज्योतिरस्ति। तदेव आंग्लभाषायां (Arora Borealis) इति कथयन्ति। तेन तत्कालस्थितिरवगम्यते। तस्मात्, वेदेषूक्त सूक्तेभ्यः नवनवा गूढार्थाः गुप्ता अनेके विषया ज्ञातव्या मेधाविभिः।

इति शम्।



सूचना — अस्य व्यासस्य मूलं — लोकमान्यतिलकस्य "Arctic home in the vedas" पुस्तकम्।

# स्वप्नोऽपि यदि सत्यः स्यात्!

— ना. व. निगमान्तः, प्रोद्दुटूरु ।

[ पूर्वानुबन्धः ]

एतद्द्वारा धनागमः ईषदधिकोऽभूत् । उषितपूर्वं गृहं तत्परित्यज्य अत्र इदानीं — उष्यते । इदमपि वेश्म नाऽतिबृहत् । जलादिकमपि न पर्याप्तमस्ति । मादृशैः कुटुम्बिभिः महाप्रासादवासः कथं प्राप्तुं शक्यते? विद्याविषये, धनागमे च यः शुष्कोऽभूत् दैवानुग्रहः, स तु मत्सन्तत्यभिवृद्धौ परं परिपूर्णः समजनि । गृहवैशाल्याभावेऽपि मत्कुटुम्बवैशाल्यं अत्यधिकं समपद्यत । अधन्यस्य मम पञ्च पुत्रिकाः चत्वारः पुत्राश्च । प्रथमा कलाशालायां बी.ए. अधीते। द्वितीयाऽपि तत्रैव । ज्येष्ठः पुत्रः नगरीयोन्नत पाठशालायां पठति । इतरे प्रारम्भपाठशालाविद्यार्थिनः । मदधिष्ठितं इदं गृहमपि मदार्जितं न । शुल्कदानपूर्वक मत्रोष्यते । एतद्गृहीयं आवरणमपि जीर्णं सरन्ध्रं च आस्ते । अत एव वृष्टौ सत्यां जलं सन्ततं स्रवेत् । गृहाधिपाय शतवारं निवेदितम् । सोऽपि अचिरादेव सर्वं नूतनीकरिष्यते इति कथयन्नस्ति । कोपेन यत्किमप्युक्तं चेत्, गृहमिदं परित्यज्य गृहान्तरं स्वैरं गम्यतां इति निर्दयं प्रतिवदति । अद्य आवश्यकानि वस्तूनि नोपलभ्यन्ते । यदि लभ्येत तदपि द्विगुणितमूल्यदानादेव । तण्डुलं शुद्धं न कुत्राऽपि दृश्यते । दृष्टं च यत् तत्पूतिगन्धि मृत्पाषाणखण्डादिदूषितं अधिकमूल्यं च भवति । तिलतैलस्य मूल्यं चन्द्रमण्डलं आरुरोह । अत एवाऽस्माभिः तैलाभ्यञ्जनं दूरीकृतम् । गृहस्थिते कूपे अनावृष्टया जल मत्यल्प मस्ति । तदप्यपर्याप्तमेव । समीपे कूपाः न सन्ति । विद्यमानेष्वपि तेषु जलाभाव एव दृश्यते ।

नगरपालकनिर्मितनासिकातः प्रातः एकघटिकाकालपर्यन्तं जलं क्षरति। तदपि पङ्ककलुषितं भवति। शर्करा नाममात्रशेषा राजकीयप्रमुखलभ्या च। तदभावा दद्यगुडसंसक्तकाफी पीयते, तत्पाने च उष्णाधिक्या दुदरबाधा जायते। वस्त्रालयं गत्वा वस्त्रमूल्ये विचारिते तदाकर्णनेन चित्तभ्रमः संजायते। अत एव कालेऽस्मिन् श्राद्धादावपि भोक्त्रे वस्त्रस्थाने दर्भा एव दीयन्ते। एतत्साहचर्यात् तिन्त्रिण्यादीनामपि मूल्यमधिकं जातम्। प्रत्यहं क्षीरनामभाक् नीरमेव गोपालकेन दीयते। तत्रापि अर्घोन्नत्यमेव कारणत्वेन प्रदर्श्यते। दोषः कथितो यदि परेद्युः तदपि न लभ्येत। अत एव भयान्नकिमप्युच्यतेऽस्माभिः। अनावृष्टिरूपहेतुं प्रदर्श्य, नदीबन्धनस्थलेषु आवश्यकजलाभावात् विद्युत् न्यूनीकृतेति सर्वकारैः प्रकटितम्। सूर्यास्तमयात्पूर्वं सन्ध्यायामेव बौद्धैरिव अस्माभि र्भुज्यते। सर्वकारीयोत्सवेषु, कक्ष्यासमावेशेषु च असङ्ख्याकाः विद्युद्दीपाः प्रकाशन्ते। तत्र नाऽयं नियमः। अस्मादेव कारणात् मृत्तैलमपि संप्रति न लभ्यते। यत्र कुत्रापि यदि स्वल्पं दीयेत, तत् स्वीकर्तुं जनाः त्वरार्ताः धावन्ति। तत्र केशाकेशि कुर्वते च। अस्मादृशैः तत्र गत्वा पृष्टं चेत् अद्य नास्ति श्वः आगच्छेति विक्रेता साटोपं वदति। गोधूममैदाचूर्णादीनां प्राप्तिः शशशृङ्गतुल्या राजते। रिक्तानुजिधृक्षुभिः सर्वकारैः तत्र तत्र न्याय्यविक्रयशालाः स्थापिताः। तत्र क्रयणाय आधिकारिकं पत्रं मपेक्ष्यते। तदर्थं दशवारं नियमिताधिकारिणां सकाशे विज्ञापनपत्राणि बहूनि दत्तानि। एतावत्पर्यन्तं नानुमतिः दत्ता। विचार्यमाणे तस्मै गूढधनं (मामूल्) देयमिति श्रुतम्। दातुं रूप्यकाणि कस्य हस्ते सन्ति? आप्तान् सम्प्रार्थ्य तदीयं पत्रं स्वीकृत्य तत्र गत्वा यदि पृष्टं तर्हि संप्रति नास्ति सर्वं व्ययीकृतमिति तेनोच्यते। वासनाचूर्णं सुगन्धि केशतैलं

एवमादीनि परित्यक्तानि । जलदौर्लभ्यात् प्रतिदिनं न सर्वैः स्नायते । दिनद्वये दिनत्रये वा एकवारं काकस्नान माचर्यते, तावदेव। साधारणपदार्थानां मूल्यं एवं चेत्, स्वतोऽनर्घाणां सुवर्णादीनां मूल्यं कियत्स्यादित्येतत् कैमुतिकन्यायसिद्धम्। कलिमहत्वाद्धेतोः अद्य लोके नास्तिकवादः सुप्रसिद्धो भाति । देवो नास्ति। पुराणादिकं सर्वं कल्पितं, पापपुण्ये न स्तः, नास्ति लोकान्तरम् । अत एव श्राद्धादयः व्यर्थाः। ते केवलं पुरोहित धनदायकाः। तत्करणेन न पितृप्रीतिः भवति । सकलैरपि सङ्करजातिविवाह एव कार्यः । तत्राऽपि न पुरोहितापेक्षा । द्वित्रिकक्ष्याप्रमुखानां पुरतः वधूवरयो मल्यपरिवर्तनं कर्तव्यम् । इयमेव विवाहपद्धतिः इति तत्र तत्रोद्घोषयन्ति कक्ष्योपन्यासकाः। तस्मात् जनानां श्राद्धादिकरणे श्रद्धा क्षीणा जाता। न कोऽपि करोति। कुर्वन्नपि न व्ययीकरोति । विवाहादिषु बहुधनव्ययेन क्रियमाणेष्वपि पुरोहितेन लभ्यते रूप्यकत्रयम् । एवं स्थिते काले सततकर्माचरणेऽपि पर्याप्तं धनं न लभ्यते । अनेकविधं ऋणमपि कृतम् । तथापि अत्र संसारे असन्तुष्टिरेवाऽवशिष्टा । सर्वकारैः पुनः पुनः नानाविधाः सदुपायाः आज्ञाश्च प्रकटीक्रियन्ते । फलन्तु शून्यम्। इदानीमपि तण्डुलादिस्वीकरणायैव न्याय्यविक्रयशालां गत्वा प्रतिनिवृत्तोऽहम् । अयमेव मदीयः पूर्ववृत्तान्तः । अये ! किमेतत् ? शारीरिकश्रमाधिक्यात् निद्रा मन्नेत्रे प्रसन्नं आलिङ्गतीव दृश्यते ...।

सुखस्पर्शातिपरमणीयः समयः । मलयजो वायुः मन्दं मन्दं चलन् जनानां मनसि नवनवामानन्दसन्ततिं उत्पादयति स्म । अत्युत्तमं अनर्घं च कञ्चुकादिकं धरन्नहं कस्याश्चन अदृष्टपूर्वायाः नगर्याः वीथ्यां शनैः चरन्नभूवम् । अभ्रंलिहाभिः सौधपंक्तिभिः व्याप्ता रथ्याः छायातरुभिः विचित्रदीपैः सदादीप्तैः विराजितानि मनोरञ्जकान्युपवनानि सर्वदा जलं वर्षन्त्यः असंख्याकाः जल-

नालिकाः मितजनपूर्णानि यन्त्रसाहाय्यात् स्वयं गतानि सारथि रहितानि विचित्राणि मोदकरयानादीनि, द्विचक्रत्रिचक्रशकटानि इत्येवं विधैः नागरिकतासूचकैः चिह्नैर्बहुभिः समुल्लसन्ती आसीत् सा पुरी। रथ्यायाः उभयोः पार्श्वयोरपि सालङ्काराः सन्तुष्टाश्च जनाः यत्किमपि भाषमाणाः अगच्छन्। न कस्मि न्नपि कुड्ये वैद्युतिकनाटकीयं सिनेमा, समावेशद्योतकं वा सूचनापत्रं एकमपि दृश्यत। भवनभित्तयः सर्वा अपि सुधा धवलिताः व्यभासन्त। चतुष्य थेषु तन्मध्य निर्मितायां उन्नतायां वेदिकायां स्थापिताः यन्त्रस्तम्भाः तदा तदा हरितेन, रक्तेन च विद्युद्दीपेन तत्र धावतां यानानां मनुजानां च कृते गमनसूचनं अकार्षुः। तत्र तत्र महान्तः आवश्यक-वस्तुपूर्णाश्च आपणाः स्थापिताः। तन्नगरवास्तव्याः जनाश्च अभीष्टानि स्वीकुर्वन्तः अगमन्। जननिर्भरे आपणद्वारे अमङ्गला वाक् न कस्यापि मुखान्निसृता। आपणिकोऽपि मन्दं हसन् मृदु-भाषमाणः व्यक्रीणात्। जलनालिकासमीपे जनाः अतीव विरलाः अदृश्यन्त। तत्र मुष्टियुद्धं, कटुभाषणं वा न कृतम्। धूमशकटालये, चतुश्चक्रयानालये वैद्युतिकनाटकभवनद्वारि वा जनसम्मर्दः "Q" नियमो वा नाऽभूत्। एतत्सर्वं सानन्दं वदनं व्यादाय वीक्षमाणोऽहं विलक्षः भाषणासमर्थश्च समजनिषि। यत्नेन कस्यचन महापणस्य निकटमेत्य अपश्यम्। अहो! कथं वदेयम्? एकत्र शरच्चन्द्रचन्द्रिका धवलाः नानाविधाः तण्डुलाः अपरत्र तुहिनपुञ्जसमानः शर्कराराशिः, अन्यत्र अतिविशुद्धं महाभाण्डे स्थितं तैलं, अनल्पानि कामनासाधनानि गोधूमादिधान्यपूरिताः गोण्यः एवमादीनि अत्यन्तावश्यकानि वस्तूनि बहूनि तत्र तत्र स्थापितान्यभूवन्। समीपागतं मां वीक्ष्य स्वासनादुत्थाय तदापण-स्वामी "नमो नमः" आगच्छन्तु भोः! इति सस्मितं वदन् कस्मिंश्चनासने उपावेशयत्।

[अनुवर्तते]



# गणेशस्तोत्रावलिः

— बालगणपतिभट्टः, श्रीरङ्गपत्तनम् ।

[ शैवागमे गणेशस्य द्वात्रिंशत् प्रभेदाः कथिताः । तेषां लक्षणानि च भिन्नतयैवोल्लिखितानि । प्रस्तुतस्तोत्रावलीयं तदाधारेण विरचिता ]

१. देशकालप्रभेदेन द्वात्रिंशद्रूपरूपितम् ।
दारिद्रयाद्यार्तिहन्तारं गणेशं सदयं भजे ॥

२. 'बाला'भिधानविघ्नेशं रक्तवर्णं चतुर्भुजम् ।
पार्वतीहृदयानन्ददातारं शरणं भजे ॥

३. अष्टहस्तं लोहिताङ्गं 'तरुणा'ख्यं गणेश्वरम् ।
शूर्पकर्णमहं वन्दे विद्याबुद्धिप्रदायकम् ॥

४. श्वेतवर्णं चतुर्हस्तं सर्वाभीष्टफलप्रदम् ।
'भक्ता'ख्यं भक्तवरदं गजवक्त्रमहं भजे ॥

५. रक्तवर्णं दशभुजं पाशांकुशधरप्रभुम् ।
'वीराभिधानलसितं उमासुत महं भजे ॥

६. सिन्दूरवर्णं 'शक्त्या'ख्यं चतुर्भुज मिभाननम् ।
दुष्टदैत्यहरं देवं लम्बोदरमहं भजे ॥

७. शुभ्रवर्णं चतुर्बाहुं 'द्विजा'ख्यं द्विजपूजितम् ।
फालचन्द्रमहं वन्दे द्विजराजधरात्मजम् ॥

८. पिशङ्गकान्तकायं तं चतुर्बाहुसमन्वितम् ।
'सिद्धा'ख्यं गणपं वन्दे श्रीमन्तं सिद्धिदायकम् ॥

९. नीलवर्णं त्रिणेत्रञ्च क्षिप्तानुग्रहदं विभुम् ।
'उच्छिष्ट'गणपं वन्दे दुष्टारिष्टनिवृत्तये ॥

१०. स्वर्णवर्णं दशभुजं 'विघ्नाधिप'गणेश्वरम् ।
विघ्नाद्रिभेदकुलिशं द्वैमातुर महं भजे ॥

११. रक्ताङ्गलसितं देवं चतुर्हस्तसमन्वितम् ।
वन्दे 'क्षिप्रा'ख्य विघ्नेशं नागबद्धोदरं प्रभुम् ॥

१२. पञ्चद्विपमुखं गौरवर्णं पञ्चास्यवाहनम् ।
कुब्जरूपधरं वन्दे 'हेरम्बा'ख्यं गणेश्वरम् ॥

१३. 'लक्ष्मी'गणपतिं वन्दे दशहस्तविशोभितम् ।
चन्द्रिकाधवलं देवं चन्द्रगर्वापहारकम् ॥

१४. 'महा'गणपतिं वन्दे नेत्रत्रयविराजितम् ।
दशहस्तं मूषवाहं सुरश्रेष्ठं शिवात्मजम् ॥

१५. 'विजया'ख्यं गणपतिं रक्तवर्णं चतुर्भुजम् ।
वन्दे विजयदातारं सर्वकार्येषु सर्वदा ॥

१६. 'नृत्त'नामकविघ्नेशं पीतवर्णं चतुर्भुजम् ।
विलम्बियज्ञसूत्राढ्यं वन्दे नर्तनतत्परम् ॥

१७. वन्दे सौवर्णवर्णाभं षड्भुजं तु विनायकम् ।
'ऊर्ध्वा'भिधानलसितं भुक्तिमुक्ति प्रदायकम् ॥

१८. गकारजपसुप्रीतं रक्तवर्णं चतुर्भुजम् ।
'एकाक्षरा'ख्यमनिशं सेवे षण्मुखपूर्वजम् ॥

१९. रक्तवर्णं चतुर्बाहुं 'वराख्यं'च गणेश्वरम् ।
प्रपन्नानाञ्च वरदं धूमकेतुमहं भजे ॥

२०. जाम्बूनदनिभंदेवं चतुर्बाहुं गणेश्वरम् ।
'त्र्यक्ष'राभिधविघ्नेशं वन्दे तं मोदकप्रियम् ॥

२१. षडास्यपूर्वजं वन्दे षड्भुजं तं गणेश्वरम् ।
'क्षिप्रा'भिधानं सुमुखं रक्तचन्दनलेपनम् ॥

२२. हरिद्रावर्णलसितं चतुर्बाहु समन्वितम् ।
वन्देऽहं कपिलं देवं 'हरिद्रा'ख्यं गणेश्वरम् ॥

२३. 'एकदन्ता'भिधं देवं श्यामवर्णं चतुर्भुजम् ।
विकटं नागभूषं तं द्विप मेकं भजाम्यहम् ॥

२४. रक्तकायं चतुर्बाहुं लोकसर्जन तत्परम् ।
'सृष्टया'ख्यं गणपं वन्दे स्रष्टृहस्तप्रपूजितम् ॥

२५. ऋणमोचनकर्तारं 'ऋणमोचक' नामकम् ।
गणेश्वरमहं वन्दे शुक्लवर्णं चतुर्भुजम् ॥

२६. 'उद्दण्ड'गणपतिं वन्दे उद्दण्डासुरभञ्जकम् ।
भुजद्वादशशोभाढ्यं रक्तवर्णं गणेश्वरम् ॥

२७. 'ढुण्ढि'नामकविघ्नेशं रक्तवर्णं चतुर्भजम् ।
नमामि परया भक्त्या गणेश्वर महर्निशम् ॥

२८. 'द्विमुखा'ख्य महं, वन्दे हरिद्वर्णेन रञ्जितम् ।
चतुर्बाहुसमायुक्तं गणेश्वर मनामयम् ॥

२९. लोहिताङ्गञ्च विघ्नेशं षड्बाहुपरिशोभितम् ।
शत्रुवश्यकरं वन्दे 'त्रिमुखा'ख्यं गणेश्वरम् ॥

३०. श्वेतवर्णं गणाध्यक्षं अष्टबाहुविराजितम् ।
मोक्षप्रदानकुशलं वन्दे 'सिम्हा'ख्य विघ्नपम् ।।

३१. रक्तवर्णं चतुर्बाहुं 'योग'नामकविघ्नपम् ।
वन्दे गणपतिं भक्त्या परयाऽहं विनायकम् ।।

३२. सौवर्णवर्णशोभाङ्गं अष्टहस्तविराजितम् ।
'दुर्गा'गणपतिं सेवे दुर्गदुःखविनाशकम् ।।

३३. सङ्कष्टहर'विघ्नेशं रक्तवर्णं चतुर्भुजम् ।
वन्दे सङ्कष्टहर्तारं देवदानववन्दितम् ।

३४. द्वात्रिंशद्गणनाथानां स्तोत्रमेतच्छुभावहम् ।
यः पठेत्प्रयतो भक्त्या स विघ्नेश प्रसादभाक् ।।



# रामायणसारः

— राणि शिवशङ्करशर्मा,
मोडेकुरुं ।



१. साकेतराजाज्जननं यज्ञसंरक्षणं मुनेः ।
रामस्यारण्यगमनं सीतापहरणं ततः ।

२. राम वानरयो मैत्री उदधे स्सेतुबन्धनम् ।
पौलस्त्यमूलनाशश्च सीतारामाभिषेचनम् ।।

# राष्ट्रीय गवेषणा - विकास - निगमः भारतस्य
## (सर्वकारीयः उद्योगः)

### कार्यकलापानां विषये संक्षिप्तं विवरणम् ।

प्राचीनकालात् संस्कृतभाषकै रस्मत्पूर्वजैरपि भौतिक-जगतः परीक्षण-विश्लेषणादीनि कृत्वा कतिपया हि आश्चर्य-कारकाः पदार्थाः निर्मीयन्ते स्म । अपारे संस्कृत-वाङ्मये पृष्ठे पृष्ठे तादृशा उल्लेखाः मिलन्ति । तेषां संशोधनं अत्यावश्यकं वर्तते । उदाहरणार्थं 'विद्युच्चालितं वायुयानम्' 'अग्नियानम्' अनश्वरथेन अनिलरंहसा' इत्यादि इत्यादि । तेषां रहस्यानां पुनः प्रापणेन नूतन-उद्यमानां स्थापना स्संस्कृतज्ञा स्स्वयमेव कर्तुं पारयिष्यन्ति । परं, न संस्कृताः विज्ञानं पठन्ति न वा वैज्ञानिका स्संस्कृतम् । तेन तत्कार्यं नाद्यावधि गतिं लभते स्वतन्त्रे सत्यपि भारते। जर्मन्-पण्डितैः कश्मीरान्नीतायाः (Heavier than airflying machines) पैप्पलाद संहितायाः अनुवादस्य आधारेणैव 'वायोरपि - गुरुतर - वायुयानस्य निर्मितिः सञ्जाता इत्येतदवधारणीयं भवति ।

गवेषणा - आविष्कार - विकास - सदृशानि तानि कार्याणि सन्ति । अत स्तदर्थं सर्वकारेण या स्सुविधाः उपलभ्याः कृता स्सन्ति, तान् संस्कृतभाषाभिमानिनः जानन्तु, तत्कार्ये प्रतिभा - विचक्षणा-पूर्वकाः प्रवृत्ताः भवन्तु, संस्कृत-प्रणयि-विज्ञान-स्नात. कान् वा प्रेरयन्तु, इति हेतुना एतद् रा. ग. वि. नि. (एन्. आर्-डी. सी.) विषयकं संक्षिप्तं विवरणं दीयते ।

एकः प्रसिद्धः सत्पुरुषः कथयति, "स्वीय - तीक्ष्ण - द्विबु-कौशल्येन अस्य अद्भुत - राष्ट्रस्य प्राचीनै जनै रस्मिन् भौतिक -

क्षेत्रेऽपि यानि वस्तूनि अधिगतानि - निर्मितानि च आसन्, तानि राष्ट्रान्तरीय - जनैस्वप्नेष्वपि न ज्ञायन्ते ।"

एतन्महापुरुष - वचन न मिथ्या स्यात् । परं संस्कृत - राष्ट्रभाषा - पक्षपातिभिस्तद् पुनरपि सर्वजन-साक्ष्ये आनेतव्यम् ।

'विस्तारणं जीवित-लक्षणं, सङ्कोचनं मृतिः ।'

भारत-सर्वकारेण १९५३ तमखिस्ताब्दे 'राष्ट्रीयः गवेषणा-विकास निगमः' (रा. ग. वि. नि. = एन्. अर्. डी. सी.) एका अलाभकरी सङ्घटना इति कृत्वा संस्थापिता अभवत् । समवाय-दण्डविधानस्य २५ तम-नियमानुसारेण एषा संस्था पञ्जीयिता अस्ति । राष्ट्रं (आर्थिकौद्योगिकक्षेत्रे) इदं आत्मनिर्भरतां प्राप्नोतु इति हेतुना, राष्ट्रगत - सर्वविध - स्रोतोभ्य स्स्वदेशीय - आविष्कार - प्रकिया - तन्त्रविधादीनां प्रोत्साहनं, विकसनं, लाभनिष्पादनं च इति त्रिविध - कार्यस्य भारः तस्याः उपरि विहितोऽस्ति । 'रागविनिः' जनेषु, विशेषेण स्वतन्त्र - श्रामिक - शिल्पितन्त्रज्ञादिषु, आविष्करण - प्रवृत्ते स्संवर्धनं कर्तुं अभिलषति ।

किं किं करोति रा. ग. वि. निः ?

१. अधोलिखितानां आविष्कारादीनां, तन्त्रज्ञानस्य च विक्रयस्य माध्यस्थ्यं आचरति ।

क) वैज्ञानिक - औद्योगिक - अनुसन्धान - परिषदन्तर्गताः प्रयोगशालाः, भारतीय-कृषि-अनुसन्धान-परिषद्, भारतीय-भैषज्य - अनुसन्धान - परिषद्, प्रतिरक्षा - अनुसंधान - विकास - संघटना, अनुसंधान - रूपाङ्कन - मानक - संघटना लोहमार्गीया, भभा - परमाणवीय - अनुसन्धान-केन्द्रं, भार-

तीय - तान्त्रिकीया स्संस्थाः, विश्वविद्यालयाश्च च इत्यादिभि स्सर्वकारीय – क्षेत्रस्थैः प्रयोगालयैः विकासिताः, एकस्वीकृताः यन्त्र - प्रक्रियादिक - आविष्कृतयः।

ख) सार्वजनिकै स्वायत्तै उद्योगैर्वा रागविनि अधीनत्वे रक्षिताः उत्पादन - विधयः।

ग) स्वतन्त्र - व्यक्तीनां एकस्वीकृताः आविष्कृतयः।

२. सार्वजनिक - क्षेत्रस्थ – संघटनानां आविष्काराणां एकस्वीकरणे साहाय्यकारी भवति।

३. राष्ट्रीयदृटच्या महत्त्वपूर्णानां अग्रिम - निर्माणिकानां, (Pilot plamts) विकासकार्याणां च स्वयं स्वतन्त्ररूपेण, उद्योग सहयोगेन वा सक्रियं भारं वहति।

४. रागविनि – प्रदत्त - प्रणिधीनां व्यापारिक - उत्पादनार्थं एव विशेषरूपेण संस्थापित समवायानां सामान्य - नीविविनियोजने सहभागी भवति।

५. स्वतन्त्र-व्यक्तीनां तात्विक-दृष्टचा सुसंभवानां, व्यापारिकदृष्टचा स्पर्धाऽक्षमाणां च नूतन-कल्पनानां आविष्काराणां च विकासार्थं, एकस्वीकरणार्थं च आर्थिकं साहाय्यं अनुददाति।

६. वैशिष्टचपूर्ण - आविष्काराणां कृते धन-पुरस्काराः, गुणवत्ता - प्रमाणपत्राणि च प्रयच्छति।

७. स्वीय - विशेषज्ञेभ्यः, परामर्शदातॄन् नियुज्य वा स्वतन्त्र - आविष्कारकाणां, प्रयोगालयानां वा कार्याणां मूल्याङ्क-

नानि कृत्वा, निर्माणिका - स्थापनार्थं, तद्विषये प्रतिवेदनानि, उद्यमिभ्यः उपलभ्यानि करोति ।

८. यदि अत्यावश्यकं मन्यते, तर्हि कस्याः अपि प्रक्रियायाः, आविष्कारस्य वा बृहत्प्रमाणे, अग्रनिर्माणिकायां वा परीक्षाणात्मक - उपादनस्य व्यवस्थां करोति ।

९. स्वदेशीय - तन्त्रज्ञानस्य विदेशेषु विक्रयार्थं साहाय्यं आचरति ।

१०. स्वदेशे अनुपलभ्यमान - तन्त्रज्ञानस्य विदेशस्थसमरूप - संस्थानां सकाशा दायातीकरणस्य व्यवस्थां करोति ।

११. रागविनि - सकाशात् तन्त्रज्ञानं कथं प्राप्तव्यम् ?

रागविनिः प्रतिवर्षं द्विवारं 'रा. ग. वि. नि. प्रक्रियाः' इत्याख्याः पुस्तिकाः प्रकाशयति । स्वसकाशे अनुमत्यर्थं उपलभ्यानां प्रक्रियाणां नामावलय स्तासु दीयन्ते । प्राथमिक-टिप्पणयः' इत्याख्याः लघ्व्यः (Short write ups) लेखान्तिकाः प्रक्रियाणां विषये प्रकाश्यन्ते । पुस्तिकाः, टिप्पणयश्च सर्वत्र प्रसार्यन्ते । रागविनि - सविधे उपलभ्यमान - अद्यतन - प्रक्रियादीनां विषये प्रमुख - वृत्तपत्रेषु, वैज्ञानिक तान्त्रिक - पत्रिकासु च समये समये विज्ञापनानि प्रकाश्यन्ते ।

[ अनुवर्तते ]



# शुचीन्द्रस्थलमाहात्म्यम्

श्री पि. परमेश्वरशर्मा

विधिहरिशर्वान् मुनिवृषभांस्तान्,
नन् पुरुदारे स्तुतिवचनै स्ते ।
प्रमुदितचित्ता वरयत यूयं,
वरमिति वाक्यं समभिदधु स्ते ॥ १

अथ मुनयोऽपि त्रिगुण सुरेशा –
निह सततं वोऽर्चयितु मनुज्ञाम् ।
दिशत कृपाढ्यस्थिति वरमेकं,
मनसि गतं ते सपदि हि वव्रुः ॥ २

विधितनयात्याश्रममुपगम्य,
त्वमतुलयज्ञैर्यज सततं माम् ।
शुकजनकत्वं मधुरिपुमाद्यं,
भज नुतिभिः पक्ष्यभिधपुरेशम् ॥ ३

शिवसदृशाख्यत्व मयि मुनीन्द्र,
प्रभज सदा श्रीफल तरुमूलम् ।
हृदयकृतै र्मां परिचरभावै –
रिति वर मेषां प्रददु रधीशाः ॥ ४

इति मुनयस्तद्वच उपकर्ण्य,
द्रुहिणरमेशौ शिवमपि नत्वा ।

अमर वरिष्ठाभिहित सुकर्मा –
ण्यमल मनीषा विदधु रतन्द्राः ॥ ५

तदनु महीरुस्त कलियुगादौ,
समभव दारग्वधतरुरूपः ।
तमिह महेशावतरसुमूर्तिः,
परिचरति स्म द्विजगणवर्यः ॥ ६

श्रीशङ्कराचार्य इति द्विजेन्द्र –
चूडामणिः केरल भूमिभागे ।
जातश्रुति द्रोहपरान् जिगीषु,
स्स बालभावे शिवभक्त आसीत् ॥ ७

तं राजवृक्षाटविकाधिनाथ
स्समानयत् ब्राह्मणरूपधारी ।
स्वमालयं तत्र दिदेश तस्मै,
ससांख्य योगं विमलं च चक्षुः ॥ ८

समाधि माश्रित्य सशंकराख्य –
श्चराचरं स्वात्मनि संविभाव्य ।
नुनाव राजद्रुम काननेशं,
पृथग्विरिचाच्युत शंभूरूपम् ॥ ९

आविर्भवन् स्थाणुरदा दमुष्मै,
सर्वज्ञभावं तदनु द्विजाय ।
अदर्शय न्नृत्यनिधि दयालो
त्वमापदोघात् परिपालयाऽस्मात् ॥ १०

प्रथमभागः समाप्तः ।

५ # गुणाः पूजास्थानं गुणिषु न च लिंगं न च वयः

ए. शेषकुमार्, नेल्लूरु ।

श्रीरामचन्द्रचरितप्रतिपादके, करुणरसप्रधानके, भवभूतिना विरचिते "उत्तररामचरिता"ख्यके नाटके चतुर्थाङ्के एतत्पादो
६ वर्तते —

"शिशुर्वा शिष्या वा यदसि मम तिष्ठतु तथा,
विशुद्धे रुत्कर्ष स्त्वयि तु मम भक्ति द्रढयति ।
७ शिशुत्वं वा स्त्रैणं वा भवतु ननु वन्द्याऽसि जगतां,
गुणाः पूजास्थानं गुणिषु न च लिङ्गं न च वयः॥ इति ।

अत्र प्रकरणे, सीता अग्निपरीक्षायां विजेत्री, तथाऽपि नीचजनापवादं श्रुत्वा तां वनं प्रेषयद्रामः इति, स्वपुत्रिकायास्सौशील्यं स्ववंशपरंपरागतं गौरवं च आलोचयन् जनकः वाल्मीकेराश्रमेऽवर्तत ।
८ तं द्रष्टु मागता अरुन्धती एतानि वाक्यानि वक्ति, निर्दोषतायाः एव पूजनीयता प्रतिपत्तिः । शिशुत्वस्य स्त्रीत्वस्य च न गणना इति ।

नैतद्विषयः नूतन इति मन्तव्यं भोः! कविकुलचूडामणिः
९ कालिदासोऽपि "कुमारसंभवे" षष्ठसर्गे वर्णयति यथा – "स्त्रीपुमानित्यनास्थैषा वृत्तं हि महतां सताम्" इति । तत्र व्योमगङ्गाप्रवाहेषु स्नाता हिमवल्कलधारिणः जन्मान्तरभावानां निर्मलानां परिपाक मुपेयुषां तपसां फलान्युपभुञ्जानाः सप्तर्षयः, साक्षात्तपस्सिद्धिवत् विराजमानया अरुन्धत्या सह ईश्वरं प्रति जग्मुः । तत्र
१० महर्षौ गतवति अरुन्धती तपश्शक्ति संपन्ना सर्वशास्त्रपारङ्गता सद्गुणगणमण्डिता इति स्त्रीत्वं अगणयन्, सर्वशक्तिमूलक ईश्वरः

सर्वेषां मुनीनां इव महता आदरेण गौरवेण च स्वागत मुक्तवान्। एतेन साधूनां चरित्रमेव पूज्यं, न तत्र स्त्रीपुंभेदो विवक्षितः इति प्रतीयते ।

बृहदारण्यकोपनिषदि अप्येतद्ध्वन्यते — याज्ञवल्क्यः वानप्रस्थाश्रमं अवलम्बितुं स्व - सर्वस्वं भार्याभ्यां (कात्यायनी मैत्रेयीभ्यां) विभक्तु मचिन्तयत् । तेन ऐहिक धनेन तृप्ता कात्यायनी । परन्तु ब्रह्मज्ञानार्थिनी मैत्रेयी तु धनं नैच्छत् ।

"येनाऽहं नाऽमृतास्यां किमहं तेन कुर्याम् ।
यदेव भगवन् वेद तदेव मे ब्रूहि ॥" इति वदति ।

तच्छ्रुत्वा याज्ञवल्क्यः, तस्याः परतत्वावधारणयोग्यतां विचिन्त्य, परब्रह्मस्वरूपं आत्मतत्वं च न्यबोधयत् । अबला इति न संशयं प्रकटितवान् ।

पूर्वभागे यथा वा पूजार्हा गुणाः, न लिङ्गविवक्षा तत्र इत्युक्तं तथैवाथ वयो - विवक्षाऽपि नास्तीति, पुराण (पुरा अपि नव इति यास्कनिर्वचनमनुसृत्य) वचनानि पश्यामः ।

पण्डितः कश्चन "बालादपि सुभाषितम्" इति कारिकां वक्ति । द्यूतपर्वणि भारते एवमस्ति — द्यूते शकुनिना सपत्नीभर्तृकस्य युधिष्ठिरस्य पराजयानन्तरं कर्णवचनं मनुगतेन दुश्शासनेन द्रौपदी (मानभङ्गाय) सभामध्ये आनीता । तां दृष्ट्वा दुःखेन विकम्पितान् पाण्डवान् क्लिश्यमानां च पाञ्चालीं दृष्ट्वा विकर्णः—

"अविवेकेन वाक्यस्य नरकस्सद्य एव नः" भीष्मधृतराष्ट्रादि कुरुवृद्धाः विदुरादिनीतिकोविदा अपि नाहुः किञ्चन इति

विमृष्टवान् । परन्तु मदोन्मत्ताः भूत्वा धर्माधर्मविचक्षणबल-रहिताः दुर्योधनादयः," त्वं तु बाल्येन भावेन धार्तराष्ट्र वदिष्यसि। यद्ब्रवीषि सभामध्ये "बालस्थविरभाषितम्"इति प्रत्यूचु:। द्रौपदी-वस्त्रापहरणाय उद्युक्ताः। पाण्डवाः अजयाः विगतभाग्यवन्तः भूत्वा ऽवमानिताः। युधिष्ठिरादीनां सज्जनानां मनसि वेदनारूप अशनि-पातः, भीमादीनां क्रोधरूप वज्राघातश्च विनाशकरी समभवत्। एतञ्च तेषां विनाशे (Irony) इति आंग्लभाषासांप्रदाये वक्तुं शक्यते इति मन्यते।

एवमेव कालिदासः कुमारसंभवे पञ्चमसर्गे वदति – दिदृक्ष-वस्तामृषयोऽभ्युपागमन्न धर्मवृद्धेषु वयस्समीक्ष्यते" इति यदा मुनयः सर्वे वयसा अल्पा अपि पार्वतीं द्रष्टुमागताः।

महाभारते अर्घाभिहरण पर्वणि, वृद्धानां भीष्मादीनां सता-मपि, ज्ञानवृद्धाय, वयसि बालाय कृष्णाय प्रथमार्घ्यदाने स्व विश्वासं प्रकटयन् सभानिर्गतं शिशुपालमुद्दिश्य "गुणवान् पूज्य-एव" इति भविष्व वचनमपि एता मेव शीर्षिकां स्पष्टीकरोति।

एतच्छीर्षिका प्राचीन हिन्दीकविवर्यः संतकबीरः दृढीकरोति।

"जाति न पूछो साधुकी, पूछ लीजिए ज्ञान।
मोल करो तलवार को, पडा रहन दो म्यान॥" इति।

एतत्पर्यन्तं ग्रन्थस्थानि उदाहरणानि पश्यामः। "वचनेन किं प्रयोजनं? कार्येण खलु फलप्राप्तिः" एतं शब्दप्रमाणमनु सृत्याऽपि अङ्गी कुर्वन्ति। यदि वयं अस्मद्ग्रन्थविषये पश्चात्यावा "These are the documents of the real India. Nothing is stating unreality in ancient India" इति उक्ति — "काव्यं

समाजदर्पणं" इति अङ्गीकुर्मः तर्हि विचार एव न। नोचेत् अपि शतशः एतच्छीर्षिका अस्मत् भारतदेशे आचर्यमाण एव। एकोनविंशतितमशताब्दे राणी विक्टोरिया भारत आंग्लदेशाद्वयपालनं समर्थतया कृतवती इति सर्वे विदन्ति। स्वतंत्रतासंग्रामे सरोजिनी-प्रभृतयः अनेकाः पुरुषैस्सह समानतया सम्मानिताः। भारतद्वीप संक्रमणकारी अपि भारतरत्न - इन्दिरागाधी, स्त्री एव खलु। केरळदेशे स्त्रियः अपि न्यायाधिपतिपीठमलंकुर्वन्ति। विद्यारङ्गे तासां पुरोगतिः सर्वैरपि ज्ञाता एव खलु।

अद्यतन इन्दिरामुखेनोच्यमानं "Seculor state" "जातिमतप्राधान्य रहित राज्यांग"मित्यादि वाक्यानि अपि ममैतां शीर्षिकां पुनः पुनः ज्ञापयन्तीति ऊह्यते।

---

## संस्कृतमाधुरी

— जयेशः, पुसद्।

जननं मधुरं, चरितं मधुरं, चरणं मधुरं, चलनं मधुरम्।
वचनं मधुरं, कथनं मधुरं, मननं मधुरं, गुणनं मधुरम्॥ १

पठनं मधुरं, रटनं मधुरं, श्रवणं मधुरं, स्रवणं मधुरम्।
स्वनितं मधुरं, क्वणितं मधुरं, ध्वनितं मधुरं, स्फुरितं मधुरम्॥

गद्यं मधुरं, पद्यं मधुरं, नाट्यं मधुरं, स्तोत्रं मधुरम्।
शस्त्रं मधुरं, स्तोत्रं मधुरं, सूक्तं मधुरं, सूत्रं मधुरम्॥ ३

गीता मधुरा, गाथा मधुरा, शैली मधुरा, रीति र्मधुरा।
विद्या मधुरा, वाचा मधुरा, नीति र्मधुरा, रूचा मधुरा॥ ४

मन्त्रो मधुरः, पाठो मधुरः, नादो मधुरः, पादो मधुरः।
गानं मधुरं, तानं मधुरं, सुरवाणी-श्रितमखिलं मधुरम्॥ ५

# एष धर्मोऽधुनातनः

श्रीधर सत्यवेंकटसुब्रह्मण्यशास्त्री, एम्. ए.
ताडेपल्लिगूडेम् ।

परोपकारो नष्टाय
लाभाय परपीडनम् ।
स्वार्थचिन्ताऽभिवृद्धयर्थ –
मेष धर्मोऽधुनातनः ॥ १

दुर्जनो लभते वृद्धि
सज्जनो लभते क्षयम् ।
वञ्चको लभते सिद्धि –
मेष धर्मोऽधुनातनः ॥ २

कार्यस्य साधनं वित्तं
वाग्वा स्या दधिकारिणः ।
तृतीयं साधनं नास्ती –
त्येष धर्मोऽधुनातनः ॥ ३

धनवान् लभते वृद्धि
दरिद्रोऽधोगति तथा ।
उपदेशे समत्वं स्या –
देष धर्मोऽधुनातनः ॥ ४

योग्यतापत्रप्राप्त्यर्थं
विद्याभ्यासो विधीयते ।
ज्ञानार्थी कोऽपि नैवास्ती –
त्येष धर्मोऽधुनातनः ॥ ५

परिश्रमी विनश्येच्च
यजमानः सुखी भवेत् ।
कष्टी फली भवे न्नैवे –
त्येष धर्मोऽधुनातनः ॥ ६

जयत्यधर्मो लोकेऽद्य
धर्मस्य तु पराजयः ।
धार्मिको न हि कश्चित्स्या –
देष धर्मोऽधुनातनः ॥ ७

माता शत्रुः पिता वैरी
बान्धवास्त्वनपेक्षिताः ।
भार्यैवैका प्रियं मित्र –
मेष धर्मोऽधुनातनः ॥ ८



## तेलुगु - साहित्य - दिग्दर्शनम्

★

[ इदं संस्कृतीकरणं "लेण्ड् मार्क्स् इन् तेलुगु लिटरेचर्' – नामकं आंग्लग्रन्थं श्रीमता सि. आर्. शर्मणा लिखितं (१९७५) आधारीकृत्य प्रवृत्तम् । श्री चल्ला राधाकृष्णशर्ममहोदयाः, येतावदद्यत्वे "साहित्य अकाडमी - नवदेहली - संस्थायां अधिकृता स्सन्तः दक्षिण - प्रान्त कार्यालये मद्रास् नगरे साहित्य - सेवां कुर्वन्ति" — आस्माकीन कृतज्ञताञ्जलि मर्हन्तीति सविनय प्रणयं विज्ञाप्यते । ]

आ. वरदराजः, (अवरः)



# तेलुगु - साहित्य - दिग्दर्शनम्

## तेलुगुभाषा

★

अस्मद्भारतदेशे स्वातन्त्र्य प्राप्त्यनन्तरं भाषाप्रयुक्त राज्य-विभागः सम्पन्नः । स्वातन्त्र्योद्यमकाले राष्ट्रपितुः गान्धी-महोदयस्य आध्यक्ष्ये राष्ट्रीय - पुनर्निर्माणाङ्गतया निर्णीतानां कार्यक्रमाणामन्यतमो भागोऽयं यत् भाषाप्रयुक्त राज्यविभागः अवश्यं कर्तव्यः इति; यतो हि जनतन्त्रात्मके भारतीय गणराज्ये काले काले प्रवर्तमानेषु सार्वजनिकनिर्वाचनेषु जनवाक्यश्रवणं सुकरं भवेत्, जनेभ्यः बहुमतप्राप्त्यर्थं नेतारोऽपि तत्तत्प्रादेशिक

**तेलुगुजनपदम्** —

तेलुगुभाषा प्राधान्येन अद्यतनान्ध्रप्रदेशे व्यवह्रियते यश्च; (आन्ध्रप्रदेशः) भूमध्यरेखातः उत्तरेण १२° १४′ एवं १९° ५४′ अंशानां (अक्षांशरेखानां) मध्ये, ग्रीनिच्नगरात् पूर्वतः ७६° ५०′ एवं ८४° ५०′ अंशानां च (ध्रुवरेखानां) मध्ये वर्तते। अस्य सीमास्तु उत्तरतः ओरिस्सा मध्यप्रदेशौ, पूर्वतो वङ्गसमुद्रः, दक्षिणतः तमिलनाडुप्रदेशः, पश्चिमतः कर्नाटक - महाराष्ट्रप्रदेशौ च — सन्ति। अस्य समुद्रतीरप्रान्तभूमिः ९६० षष्ठ्युत्तर नवशत कि. मी. दैर्घ्ययुता, यत्र १० नौकाश्रया उच्चावचाः सन्ति। अस्य वैशाल्यं २,७५,१०९ (नवाधिकशतोत्तरपञ्चसप्ततिसहस्रान्वित-लक्षद्वय) वर्ग कि.मी. परिमितम्। अस्य जनसंख्या तु १९७१ संवत्स-रीय जनगणनानुरोधेन ४,३३,९४,९५१ (एकपञ्चाशदधिकनव-शतोत्तर-चतुर्नवतिसहस्रयुत - त्रयस्त्रिंशल्लक्षान्वित - चतुष्कोट्यः) एवं भारते राष्ट्रभाषात्वेन स्वीकृत हिन्दीभाषायाः पश्चात् भार-तीयभाषासु द्वितीय - भाषास्थानं वहन्तीयं तेलुगुभाषा अस्मिन् जनपदे शोभते।

[अनुवर्तते]



भारतसर्वकारेण पुरस्कृता

# गैर्वाणी

वार्षिकम् ५–००

---

## प्रहेलिका



कान्ते धावय मे पादाविति भर्त्रा निवेदिता ।
न* तया धावितौ पादौ भर्तुराज्ञा न लङ्घिता ॥

*नतया नम्रीभूतया ।

---

Published by Sri N. Ramanatha Aiyar, B.A., B.L., Advocate & Secretary,
S. B. P. Sabha, Chittoor. (A. P.)
Printed by Sri K. V. Raghavan (in-charge)
at Vijaya Press, Chittoor. (A. P.) *C.* 1500.

Please mention your membership Number for easy correspondence.

*R. N. 1845/60.* *Postal C. T. R. 11.*

आन्ध्रप्रदेशसर्वकारेणानुमोदिता R. C. No.27-A 3/65 Dated 14-7-'65.
Licensed to Post without Prepayment. LICENCE No. 1.

# गैर्वाणी

To

Sri

1008. The Editor,
Gurukula Patrika,
Gurukula,
Kangedi Viswa Vidyalaya,
Haridwar.

If undelivered please return to
Sanskrit Bhasha Pracharini Sabha, Chittoor A. P.

वाणीं भजत गैर्वाणीम्!

# गैर्वाणी

## मासिकी पत्रिका



संपुट: १६ | JUNE 1978 | क्रमांक: ६



कालयुक्ति ज्येष्ठाङ्कः | शकाब्दा: 1900 | मूल्यम् ०-५० पैसा:

# विषयसूचिका







# श्रीभगवत्पादस्तुतिः

ति. गो. अनन्तसुब्रह्मण्यम्,
सङ्गीतभूषणम्, तिरुपति ।

रागः — आभोगि आ – स – रि ग – म – द – सं
तालः — आदि अ – सं – द – म – ग – रि – स

पल्लवि

श्री सद्गुरुवरं नमामि सततम्
श्री चक्रराज पूजा निरतम् ॥ ॥ श्री सद्गुरु ॥

अनुपल्लवि

श्रीविद्याद्वैतज्ञानप्रतिष्ठितम्
श्रीशाक्त्यादिषण्मतस्थापकम् ॥ ॥ श्री सद्गुरु ॥

चरणम्

पञ्चाक्षराक्षरमालाशोभितम्
पञ्चभूतप्रपञ्चप्रकाशकम्
पाषण्डादिदुर्मतप्रणाशकम्
कोदण्डकाषायवसनोपेतम् ॥ ॥ श्रीसद्गुरु ॥



सूचना — असौ रागः द्वाविंशतिसंख्याक "खरहरप्रिया" जनक-राग जन्यः ।



# गैर्वाणी

१५-६-१९७८ * कालयुक्ति ज्येष्ठाङ्कः

## भारतानुशासनम्

भारतीय राजकीयक्षेत्रे १९७७ मार्च् (१८९९ चैत्र) मास यदनूह्यं परिवर्तन मानयति स्म, तेन राजनैतिक स्थिति गतिविषये महान् परिणाम स्संजातः। भारतीयसंविधानं स्वरूपत एव परिणाम - परिणाहस्य यावच्छक्यं स्थानं कल्पयितु पारयति इति सिद्धम्। इदानीं १९०० शा. श. १९७८ क्री. श. वत्सरे स्वभावतोऽपि तत्सामर्थ्यं निरूपयितु मुद्युक्ते इति चेद्वार्ता, साऽभि वन्दनीया राष्ट्रीय हितैषिभि स्सर्वैः। अस्मिन् सन्दर्भे पाठकाना मवधानं १९७७ मे - १८९९ - वैशाखाङ्कोपदर्शितं "गैर्वाणी स्वाभिप्रायरूपं सम्पादकीयं (भारतीयानुशासनं) कटाक्षलक्ष्यं कुर्यादिति सप्रश्रय मभ्यर्थयामहे।

* * * * *

गतेः स्थिति रुत स्थिते र्गतिरिति वितर्के "संस्कृतं" कि ब्रूयादिति विचारयामस्तावत्। "गच्छतिः" गतिं ब्रूते, "तिष्ठति

स्तन्निवृत्ति मिति वैयाकरणी सरणिः। तथा च प्रवर्तमानस्यैव निवर्तनं सङ्गतं भवति। "तदैक्षत" "बहु स्यां" इति परस्य ब्रह्मणः ईक्षण - बहुभवनयोः कार्यकारणभावः पौर्वापर्यभावो वा श्रुतिसिद्धः पुनरस्माभिः स्मर्तव्य इदानीम्। जानाति - इच्छति - करोति - (प्रवर्तते वा) इति प्रक्रिया मानवीया किमुद्दिश्य प्रचलतीति विचार्यमाणे स्वार्थमेव, स्वीयानन्दमेव इति निश्चप्रचम्। यदि परस्यैव ब्रह्मणः ईक्षणं बहुभवन - विश्रान्तं; तर्हि कथं तदीयानां जीवमात्राणां अस्मदादीनां स्वार्थनिरपेक्षा प्रवृत्तिः संभाव्येत? अतः परार्थो वा परमार्थो वाऽस्तु कामं, यदि सः स्वार्थाविरुद्धः स्यात्, (इयं लौकिकी रीतिः) अथ तस्मिन्नेव वा स्वार्थस्य संरक्षा भवेदिति विश्वासः, (इय मलौकिकी नीतिः प्राचीनाचारसिद्धा) तर्हि पूर्वोक्त मानवीय प्रक्रियाऽन्वर्था भवेत्। एवं च गति सिद्धान्तः पूर्वं प्रवृत्तः सत्तामात्रनिष्णातो भवति, यतः सुख-शान्त्यभ्युदयादि परम्परा सिद्ध्येत्। अतो गतेः स्थितिः, स्थितस्यैव पुनर्गतिरिति रीत्याऽन्योन्यार्थतत्परत्व मेव तयोर्लक्ष्यमिति भाति।

* * * * *

भारतस्य अद्यत्वे यथावस्थित स्थितिः गति-विधिश्च कीदृशीऽति विचार्यमाणे, केन्द्र - सर्वकारः प्रादेशिकसर्वकाराश्च भिन्नभिन्नपक्षाणामाध्वर्ये प्रचलन्ति। केन्द्रे प्रदेशेषु च नैकः पक्षोऽधिकृतोऽस्ति। अधिकृताः प्रादेशिकसर्वकाराः इतोऽप्यधिक मधिकारसम्पदं सम्पदधिकारं च वाञ्छन्ति। केन्द्रस्य आदाये ७५% प्रतिशतं प्रदेशानां कृते देयमिति, अवशिष्टं २५% प्रतिशतं केन्द्रनिर्वाहायाऽलमिति वदन्ति। प्रायेण ते केन्द्रस्य जीवनांशं दातु मिच्छन्तीव। प्रादेशिकसर्वकारविनिपातनाधिकारः केन्द्रस्य मा भूदिति च विवदन्ते। अर्थबलेन अधिकारबलेन च विहीनं

केन्द्रं किमर्थं भवे दजागळस्तनमिव? बलवत्तरं केन्द्रप्रभुत्वमेव राष्ट्रीयतायाः भारतीयसमग्रतायाः सर्वतोभद्रतायाश्च संरक्षकं भवितु मर्हति इति प्रतिवदन्त्यन्ये। केन्द्र - प्रदेश - सर्वकाराधिकार समतोलनं यावत्संविधानसिद्धं कार्यान्वयं न प्राप्नुयात्, तावत् डोलान्दोळितमिव स्या द्भारतीयानुशासनं राजकीयक्षेत्रे। अतोऽत्र स्थितिः सुस्थिति रपेक्ष्यते। तदानीमेव राजनैतिकगति विधिः समुचितरीत्या पुरोगतिं प्राप्नुयात्। अस्मिन् विषये नूनं संविधानं शरण्य मित्यत्र नैव विप्रतिपत्तिः। केन्द्रस्य राज्यस्य उभयोश्च यो योऽधिकारः संविधानसिद्धोऽस्ति; यथातथं तदनुसरण मेव वरीयः। नो चेत्, प्रान्तीय संकुचित दृक्पथेन राष्ट्रीयसमग्रतायाः लोपो भवेत्। न वा प्रादेशिकाभिवृद्धिनाम्ना राष्ट्रीयता-नाशः, नैव राष्ट्रीयसमग्रताख्याया प्रान्तीयाभिवृद्धि - निरोधो वा एष्टव्यः।

* * * * *

मद्यनिषेधः अद्यत्वे मनो-निग्रहस्य अपरपर्याय आसीदिव। निगृहीतं मनः अपेक्षिते एकैकमार्गे प्रवर्तयितु मनुकूलं भवति। इत्येव परमार्थः; न तु निश्चेष्टविधया स्तब्धतां साधयितुम्। एवं मद्यनिषेधः तत्पानजनितानर्थपरम्परावैपरीत्य निवृत्त्यर्थं मपेक्षणीय एव; न तु सर्वात्मना तन्निषेधः सिषाधयिषितः। व्यवस्था तु कर्तव्यैव भवे त्सर्वत्रेत्यनिवार्यम्। अति सर्वत्र वर्जयेदिति हि नीतिः। वीरपाणमप्यभ्युगतमिति किल वदन्ति।

राज्यानां केन्द्रस्य च सम्पर्कभाषाविषये विवादः विषमिवाऽरुन्तुदस्सन्नुद्वेजयति। संविधानसम्मतस्य संसद्विचाराहित - कार्यान्वययोग्यताकस्य विषयस्य कार्यवाही एव सर्वकारस्य कर्तव्यो भवति; न तु पुनः पुनः परिशीलनावकाश प्रकल्पनम्; अनवस्था प्रसंगात्, संक्षोभा त्कार्यभङ्गाच्च। सम्पर्कभाषात्वेन हिन्दी वा

आंग्ली वा अन्या वा इति प्रश्नस्य विवादस्य वा नैवावकाशः प्रदातव्यः। सम्पर्कभाषात्वेन निर्णीतपूर्वायाः हिन्द्याः स्वक्षेत्रे मित्रक्षेत्रेऽन्यत्र च कथं प्रवेशकल्पन मित्येव सर्वकारध्येयं भवेत्। आनुकूल्यस्य सम्पादनं प्रातिकूल्यस्य निरसनञ्चेत्येत त्सर्वकारायत्तम्। सम्पर्कभाषायाः आधिकारिक प्रवेशन भाषान्तराणां प्रचारे प्रसारे च निरोधं वा द्वेषं वा जनयेदिति न भेतव्यम्।

राष्ट्रीयतायाः कृते केन्द्रसर्वकारेण निर्भीकतया कर्तव्यानि बहूनि सन्ति। न तत्र कस्याऽपि राज्य सर्वकारस्य अन्यस्य वा हस्तक्षेपः समुचितः। सर्वेऽपि राज्यसर्वकाराः केन्द्रस्य अनुकूला एव भवेयुः। राष्ट्रीय योग-क्षेम सम्पादने सर्वेपि सर्वकाराः बद्धश्रद्धा भवेयुः। कार्यनिर्वाहस्य केन्द्र सर्वकारस्य तु राष्ट्रीयतोपलक्षणानां पालनं कर्तव्यमित्यत्र नैव विवादः। तन्मध्ये संस्कृतप्रचारः प्रामुख्यं भजति, यतस्तत एव सनातनी भारतीय संस्कृतिः नवनवोन्मेषा समुल्लसेत्। राष्ट्रीय पञ्चाङ्गविधानस्य दैनन्दिन व्यवहारे दिनाङ्कानां मासानां शा. शकसंवत्सरस्य च उल्लेखनं-प्रचलनं च न अपेक्षाकृतं पत्र-पत्रिकासु दरीदृश्यते। विशिष्य दक्षिणापथे हिन्दू, इण्डियन् एक्स्प्रेस् (आंग्ल्या) आन्ध्रप्रभा, आन्ध्रपत्रिका (तेलुगु) इत्यादिषु मुखपत्रे शा. श. दिनाङ्कोल्लेखनं नैव दृश्यत इति महत्खेदावहम्। सार्वजनिक जीवनप्रतिबिम्बरूपासु पत्र-पत्रिकासु राष्ट्रीयतोपलक्षकाणां विलसनं सार्वजनिक शुभानुचिन्तनं च वर्धता मभिवर्धता मितिशम्।



## अखिलभारत - संस्कृत - महामण्डलस्य

# षष्ठाधिवेशनम्

## (१३, १४, १५–५–७८ दिनाङ्केषु)



१३–५–७८ स्थिरवासरे सायं ५-वादनसमये अ. भा. सं. महामण्डलस्य श्री अर्क सोमयाजी - श्रीवरखेडकर्महोदयाभ्यां स्वस्तिवाचन - वेदमन्त्रपठन पुरस्सरं प्रारंभः अकारि। कुमारी शोभाराजु प्रार्थनागीतमालपति स्म। वरखेडकरमहोदयेन संस्कृतमहामण्डलस्य प्रधानकार्यवाहेन परिचयवाक्यनि व्याहृतानि। स्वागतभाषणं श्री अलिकट्टिमहोदयेन केन्द्रीयविद्यापीठाचार्येण कृतम्। केन्द्रीय - प्रादेशिक - सर्वकारीय - पदस्थितानां प्रमुखानां अन्येषां च राजनैतिक - सांघिक - धार्मिकमहत्तां प्राप्तवतां शुभाभिनन्दनानां सन्देशवाक्यानां च पठनं श्रीकाशीकर्महोदयेन सं. महामण्डलस्य उपकार्यवाहेन कृतम्। पूर्वनिर्धारिताध्यक्षस्य श्री बि. डि. जत्तिमहोदयस्य भारतोपराष्ट्रपतेः अनुपस्थित्या श्रीवेंकटेश्वरविश्वविद्यालयाध्यक्षेण श्रीमता सच्चिदानन्दमहोदयेन संस्कृतसमावेशानां उद्घाटन भाषणं आंग्लभाषया कृतम्। तदनन्तरं संस्कृतानुवादस्तु श्रीशंकरनारायणमहोदयेन (प्राच्य परिशोधनालय निर्देशकेन कृतः) प्रमुख संस्कृतपण्डितानां – (१) श्री कृष्णस्वामिमहोदयः, (संस्कृतविभागाध्यक्षः श्री वें. विश्वविद्यालयस्य) (२) श्री यन्. यस्. रामानुजताताचार्यः, (आचार्यः केन्द्रीयविद्यापीठस्य) (३) श्री के. श्रीनिवासाचार्यः, परीक्षामन्त्री, सं. भा. प्रचारिण्याः सभायाः (चित्तूरुनगरस्थायाः आं. प्र.) (४) श्री के. मुनिरेड्डिमहोदयः, प्रकाशमन्त्री (स. भा. प्र. सभायाः - चित्तूरु)

इत्यादीनां संस्कृतभाषणानन्तरं अध्यक्षैः श्री यम्. डि. बालसुब्रह्मण्यमहोदयैः केन्द्रीयविद्यापीठाध्यक्षैः समापनभाषणं कृतम् । अन्ते सं. महामण्डलस्य कार्यवाहेन धन्यवादसमर्पण माचरितम् ।

१४–५–७८ भानुवासरे पूर्वाह्णे ९-०० वादनसमये प्रवृत्ते समावेशे श्रीमतां मन्नार्गुडि घनपाठि कृष्णस्वामि अय्यंगार् आध्यक्ष्येण पण्डितप्रतिनिधीनां शास्त्रार्थविचारः संपन्नः । सायं ५-०० वादनसमये प्रकटाधिवेशने विदुषां भाषणपुरस्सराः अधोनिर्दिष्टाः कतिपयाः प्रस्तावाः पारिताः ।

१. विद्यालयेषु सर्वत्र संस्कृतबोधनस्य अनिवार्यता कल्पनीया ।

२. भारतीय संस्कृति मूलभूतस्य संस्कृतस्य राष्ट्रभाषात्व निर्णयः भारतशासकैः अवश्यं कार्यः ।

३. दक्षिणभारते संस्कृतस्य कश्चन विश्वविद्यालयः स्थापनीयः ।

४. प्राच्यविद्योपाधिनाम्नां यावद्भारतदेशं ऐकरूप्य मुपकल्पनीयम् ।

५. प्राच्यविद्याविदुषां यम्. ए. इत्यादि आंग्लोपाधिसमकक्षतां संपाद्य समानवेतनादिकं प्रकल्पनीयम् ।

६. विश्वविद्यालयेषु सर्वत्र प्राच्यपद्धत्या प्रबोधनस्य स्थानं परिकल्प्य तत्पदेषु प्राच्यपण्डितानां नियमनं कार्यम् । इत्येवमादयः ।

१५-५-७८ इन्दुवासरे पूर्वाह्णे समारोपसमावेशः अ. भा. सं. महामण्डलस्य कार्याध्यक्षस्य श्रीमतः पं० मण्डनमिश्रमहोदयस्य (प्राचार्यस्य, नरवीर केन्द्रीयसंस्कृतविद्यापीठस्य, जम्मू-स्थितस्य) समापनभाषणेन समपद्यत ।

विविधराज्येभ्यः संस्कृतप्रतिनिधयो बहवः दिनत्रयः प्रचलितेषु समावेशेषु समसिलन् ।



# विज्ञापनम्

★

संस्कृतबन्धूनां सकाशे सप्रश्रयमिदं विज्ञापनम् ।

पत्रालय व्ययाधिक्येन (पोस्टल्) कारणेन सभाप्रकाशितानां पुस्तकानां मूल्य प्रेषणार्थं अधोनिर्दिष्टाः नियमाः अवधेयाः ।

१. रु. २५-०० मूल्यपरिमितानां कृते पूर्णधनस्य प्रेषणं (M. O. आवश्यकम् । धन प्राप्त्यनन्तरमेव पुस्तक प्रेष विधया (Book Post) अपेक्षितानि पुस्तकानि प्रेष्येरन् ।

२. रु, २५-०० मूल्याधिकानां रु. ५०-०० मूल्यपरिमितानां कृते रु. १०-०० अग्रिमधनं (Advance) प्रेषणीयम् V. P. P. (देयमूल्यग्रन्थ) द्वारा पुस्तकानि प्रेष्येरन् ।

३. रु. ५०-०० मूल्याधिकानां कृते २५% अन्यूनताग्रिमधनं (अड्वान्स्) प्रेषणीयं नोचेत् देयं ग्र. (V. P. P.) न प्रेष्येत ।

४. सर्वेषामपि सभाप्रकाशितानां पुस्तकानां २०% कमिषन् दीयेत ।

## वेदसंस्कृतकलाशालायाः स्वर्णोत्सवः

१५, १६–५–१९७८ दिनाङ्कयोः आन्ध्रप्रदेशे नेल्लूरु मूलपेट-संस्कृतकलाशालास्वर्णोत्सवः डा० श्री बि. गोपालरेड्डिमहोदयस्य आध्यक्ष्येण समपद्यत । ओंकारद्वार - शारदामन्दिर - स्वर्णोत्सव-ग्रन्थालयानां प्रारंभोत्सवः, प्रमुखदातृणां चित्रपटाविष्करणं, वाल्मीकि - कालिदास - हनुमच्छास्त्रिमहोदयानां जयन्तीमहोत्सवः पण्डितसभा च कार्यक्रमे प्रामुख्य मभजन् ।

अस्मिन् स्वर्णोत्सवे श्री यन्. जनार्दनरेड्डिमहोदयः राजस्व-मन्त्री (आं. प्र.), गौरवनीयः श्री बि, वेङ्कटरामिरेड्डिः विद्यामन्त्री आं. प्र., श्री के. सच्चिदानन्दमूर्तिः यम्. ए., पि. हेच्. डि. उपकुलपतिः (श्री वेंकटेशरविश्वविद्यालयस्य), श्री वि. रामचन्द्रन् यम्. ए., बि. इडि. आन्ध्रप्रदेशोच्चतरनिर्देशकः श्री सि. मार्कण्डेयशास्त्री यम्. ए., पि. हेच्. डि. प्राच्योच्चतरविद्योपनिदेशकः, (आं. प्र.) डा० अर्कसोमयाजी यम्.ए., पि. हेच्. डि. ति. ति. देवस्थानस्य हिन्दूधर्म प्रतिष्ठान कार्यदर्शी, डा० श्री शङ्करनारायणः यम्. ए., पि. हेच. डि. तिरुपति · श्रीवेङ्कटेश्वर विश्वविद्यालय प्राच्य परि-शोधनालय निर्देशकः, डा० के. यस्. आर्. दत्तमहोदयः यम्. ए., पि. हेच. डि. तिरुपति श्रीवेङ्कटेश्वरप्राच्यकलाशालाप्राचार्यः, न्याय-मूर्तिः श्री ए. कुप्पुस्वामिमहोदयः (उच्चन्यायालये हैदराबादनगरे आ. प्र.) इत्येवमादयः प्रमुखव्यक्तयः कार्यक्रमविधाने पुरोहिता स्समभवन् ।



# संस्कृतभाषाप्रचाराय प्रयत्नः कर्तव्यः

हैदराबाद्‌नगरे सुरभारती-समितेः अष्टमवार्षिकोत्सवः ३-५-७७ दिनाङ्के आन्ध्रप्रदेश राज्यपालिकायाः श्रीमत्याः शारदा-मुखर्जीमहाभागायाः आध्यक्ष्येण सम्पन्नः ।

सु. भा. समितेः अध्यक्षः जस्टिस् अल्लाडि कुप्पुस्वामि-महोदयः समागतेभ्यः जनेभ्यः स्वागतवचनानि कथयन् नगरद्वये संस्कृतभाषाप्रचाराय स्वीकृतं कार्यक्रमं व्यवृणोत् । समिति कार्यदर्शिना पि. रामचन्द्रमहाभागेन वार्षिकनिवेदिका समर्पिता।

स्वीयाध्यक्षभाषणे — "देशीयप्रगतेः वस्तुसंपत्ते रभिवृद्धिरेव आवश्यकीति कतिपयकालपर्यन्तं पाश्चात्यदेशाना मभिप्रायः आसीत् । स इदानी मसंगत इति तै स्संलक्ष्यते" इति कथयन्त्या श्रीमत्या राज्यपालिकया भारतीय युवजनान् संस्कृतभाषाध्ययनं प्रति आकर्षितुं अनुकूल वातावरणं कल्पनीय मित्युक्तम् । संस्कृत-प्रचाराय केन्द्र-प्रदेश-सर्वकारैः प्रदीयमानं आर्थिकसाह्य मत्यल्प-मिति, न केवल मार्थिकसाह्येन अपितु समीचीन दृक्पथेन संस्कृत-प्रचारसमस्या परिष्कारः कर्तव्यः इति प्रादेशिक सर्वकारपक्षेण सर्वविधं साहाय्यं दापयितुं प्रयतिष्ये इति च श्रीमत्या तयाऽभि-भाषितम् । सुप्रसिद्ध संस्कृतपण्डितः श्री खण्डवल्लि नरसिंहशास्त्रि-वर्यः राज्यपालिकया सम्मानितः । संस्कृतभाषाध्ययनस्पर्धायाः उत्तीर्णानां श्रीमत्याः बलिजेपल्लि लक्ष्मीनरसांबायाः स्मारक-बहुमतिप्रदान मपि तया कृतम् ।

(आन्ध्रप्रभासौजन्येन)
५ मे १९७८

# ग्रीष्मऋतुः

**— जयेशः, पुसद् ।**

ग्रीष्मस्य गर्भे जननं गृहीत्वा
मासे हि जेष्ठे कुरुते प्रवेशम् ।
ग्रीष्मस्य तापं सततं प्रसूते
ज्येष्टं कनिष्ठं प्रति नास्ति भेदः ॥ १

दिवाकरस्य प्रखर प्रकाशे
दिवा विहारो बहुदुःखदोऽस्ति ।
स्वेदाम्बुना क्लिन्नतनुः पदातिः
निदाघपीडां क्षमते नसोढुम् ॥ २

विद्युत्प्रभावात् कृतशीतगेहे
कुर्वन्ति पुष्टाः धनिनो विरामम् ।
स्वेदस्नुताङ्गाः कृषका यतन्ते
अन्यस्य क्षेमे निजवृत्तिहेतोः ॥ ३

कलमं प्रहर्तुं श्रमिकाः समस्ताः
कुर्वन्ति छायाश्रयणं द्रुमाणाम् ।
तत्रैव निद्रा सुखमस्ति तेषां
गृहाणि तेषां तरवो भवन्ति ॥ ४

सूर्यांशुतप्तास्तृषिताः युवानः
मिलन्ति पातुं हिमशीतपेयम् ।

सायन्तने शीतल मन्दवाते
आबालवृद्धाः विहरन्ति मोदे ॥ ५

मासे तु जेष्ठे चरति प्रकामं
वैवाहिके मङ्गलमण्डपेऽसौ ।
महार्घवस्त्रैः परिपूर्णकायाः
यत्नप्रसन्नाः युगुलाः रमन्ते ॥ ६

आकाशमार्गे पटलं हि दृष्ट्वा
आषाढमासे कुरुते प्रवेशम् ।
भ्रमन्ति मेघाः जलरिक्तकायाः
वर्षा मवाप्तुं शमितुं निदाघम् ॥ ७



## आदिशङ्कराचार्याणां जन्मस्थले

# विश्वविद्यालयः

### पाल्घाट् – जून् ३ दि.

मलयाळ - संस्कृतभाषयोः कळाप्रबोधनार्थं आदिशङ्कराचार्य जन्मस्थले "कालडि" नामके स्वतन्त्रविश्वविद्यालयस्य प्रारम्भः आगामि षण्मासाभ्यन्तरे भविष्यतीति काञ्चीकामकोटिपीठाध्यक्षाः जगद्गुरु श्रीजयेन्द्रसरस्वतीस्वामिनः प्राचीकटन् ।

वृत्तानां विद्यार्थिनां निश्शुल्क भोजनगृह - बसतिसौकर्यं विधास्यत इति च तै रुक्तम् ।

[आन्ध्रप्रभासौजन्येन]
४ जून् १९७८.



# Samskritha Bhasha Pracharini Sabha

## CHITTOOR (A. P.)



### RESULTS OF MARCH EXAMINATIONS, 1978

## पिंगल-उत्तरायण - परीक्षा - फलितानि



The following are the Register Numbers of successful Candidates who appeared for the Samskrit Examinations held on 4th, 5th & 6th March 1978.

### PARICHAYA

I Class :— 65 66 71 75 77 83 116 38
42 43 45 47 55 56 64 81 201 21 29 91 388
97 424 37 47 62 519 24 33 46 57 61 63 67
71 82 87 90 614 24 25 28 34 to 36 39 42 to 46
48 to 50 797 801 to 03 06 to 13 15 25 76 77 902 35
38 51 61 1071 to 73 76 91 1227 1354 56 57 94
95 96 1408 82 83 86

II Class :— 2 29 to 32 34 to 43 63 74 76 82
94 101 03 05 11 to 15 17 18 32 36 39 to 41 46
48 50 51 57 65 66 68 69 72 to 74 76 to 79 84

85 97 98 99 205 09 13 to 15 19 22 to 25 27 28

30 to 32 34 39 63 64 89 90 92 94 95 304 06

11 14 73 81 82 84 90 92 95 96 98 99 422

23 26 to 29 36 39 44 48 50 52 53 67 507 08

21 23 27 30 31 34 37 42 45 50 52 55 62

66 72 78 to 80 98 600 05 13 16 to 18 23 26 29

30 31 33 37 41 782 88 90 91 94 95 804 05

19 26 27 30 35 39 73 75 78 97 99 901 11

12 14 15 28 29 31 36 37 52 to 56 59 60 62 to

66 83 84 87 1010 27 57 58 61 65 79 81 97

1102 1118 to 21 25 26 29 34 36 40 79 80 1225

31 33 40 41 43 47 48 53 77 79 93 94 99 to

1303 05 06 08 09 17 18 22 23 28 34 36 43

50 51 58 85 1421 23 to 27 48 to 51 58 71 73 77

79 80 81 85 92 94 97 99 1500 02 03 08 14

III Class:— 33 44 62 64 67 69 70 73 79

84 85 87 88 92 93 95 96 99 102 19 31 32

35 38 49 52 54 62 63 67 70 71 75 80 200

02 06 07 16 to 18 20 33 35 to 37 41 to 43 46 60

61 62 65 to 68 88 93 99 300 01 02 03 07 08 09

16 51 53 54 56 72 74 76 to 78 86 87 93 400 01

02 25 40 43 45 46 56 57 61 63 64 68 69

509 14 to 17 25 28 32 43 44 47 56 58 60 64

68 69 74 76 77 81 83 84 86 91 to 96 99 601

02 06 08 to 10 15 19 to 22 27 38 40 778 to 81 83 to

87 96 800 14 17 28 29 33 34 836 37 45 to 47

49 65 to 67 72 74 80 to 82 84 85 88 94 95 96

900 04 16 17 26 30 32 33 39 57 85 86 90

94 96 98 99 1001 002 004 005 007 009 11 12 13

16 17 22 26 60 63 77 80 82 83 85 88 90
92 94 95 98 to 1100 03 05 06 08 to 15 22
23 27 32 35 38 39 42 1205 06 08 to 11 13
14 20 21 26 28 32 34 to 37 39 42 44 45
46 49 to 52 54 to 56 63 65 69 70 72 80
to 83 86 to 88 90 91 92 1307 26 30 32 35
37to 42 44 to 46 48 49 52 82 83 84 86 1403
04 06 18 19 20 28 to 31 46 47 52 56 57
59 62 63 65 to 70 72 74 75 76 78 87 88
90 91 93 95 96 98 1501 04 07 15 to 18

**ABHIGNA**

I Class:— 473 - 75 687 747 821 941 944 68 71-
78 - 1052 1148

II Class:— 5 6 19 21 22 46 80 107 21
24 86 252 53 70 72 78 317 to 22 24 to 27
31 33 34 35 37 38 39 41 44 45 409 12 30
to 33 660 61 66 to 69 71 to 74 76 to 81
83 to 86 88 to 92 94 98 to 707 10 21 23
25 34 35 36 38 to 44 48 49 52 822 43 51
to 55 940 42 43 45 67 69 70 72 1032 36 41
47 to 51 68 1143 44 45 50 58 61 64 83 85
87 1218 1320 90 92 93 1409 11 12 37

III Class:— 4 8 to 11 14 15 18 20 44 45
48 120 22 23 87 238 51 69 71 76 77 323 28
29 30 32 36 40 42 43 57 to 71 406 08 11
13 14 17 to 19 21 34 35 72 651 53 55 to
59 62 63 65 70 75 82 93 95 to 97 708 11
to 16 18 19 22 24 26 28 29 30 32 33 37
45 54 905 918 19 20 1034 35 38 40 42 43 45

67 1152 to 54 60 82 84 85 90 91 92 1215 16 74 76 1363 87 to 89 91 97 to 1402 10

## VICHAKSHANA

I Class:— 193 254 1167 70

II Class:— 54 126 to 130 89 90 94 95 478 80 to 85 87 756 57 59 62 63 64 946 to 48 74 to 79 1008 54 1168 69 93 94 1321 69 to 75 1489

III Class:— 23 24 49 50 51 55 192 96 279 81 83 to 87 479 86 88 to 94 755 58 61 65 856 57 923 24 1053 1166 71

## SAMARTHA

I Class:– Nil

II Class:– 27 766 949 50 1172 73 1376 to 78 1415

III Class:– 25 26 56 to 61 859 to 62 906 07 1197 1379 80 1414

I Part:– 767 to 771 980 81 1196 98 99 1444

II Part:– 767 to 771 980 81 1196 98 1444

III Part:– 495 to 98 1069 70 1174 95 96 97 98

IV Part:– 81 495 to 98 1069 70 1174 1199

## KOVIDA

I Class:– Nil

II Class:– 347 48 49

III Class:– Nil

I Part:– 500 to 502 1175 77 78

II Part:– 863 1175 76

III Part:– 499 to 505 1175 77 1416 17

IV Part:– 775 76 863 1178

V Part:– 28 863 1177 78 1200 03 04 1416 17

## पिंगळ - उत्तरायण - परीक्षासु (मार्च् १९७८)

# उपयुक्तानि केन्द्राणि 60

(१) अनकापल्ली (२) अनन्तपुरम् (३) अय्यवारि-पल्ली (४) अल्लूरु (५) अवनिगड्डा (६) आदोनि (७) एलूरु (८) एलेश्वरम् (९) कडपा (१०) कर्नूलु (११) काकिनाडा (१२) कार्वेटिनगरम् (१३) कालडि (१४) कुम्भकोणम् (१५) कोयम्बुत्तूरु (१६) कोम्पेटा (१७) गारा (१८) गुण्टूरु (१९) चित्तूरु (२०) चिद-म्बरम् (२१) जिल्लेळ्ळमूडि (२२) तणुकु (२३) तंजावूरु (२४) तिरुपति (२५) तिरुनेल्वेलि (२६) तिरुनेल्वेलि जंक्षन् (२७) तुनि (२८) धवलेश्वरम् (२९) नडिगड्डपालेम् (३०) नेल्लूरु (३१) पिठापुरम् (३२) पुंगनूरु (३३) पेदरावूरु (३४) पेद्दापुरम् (३५) पेरंबूरु (३६) पेरुंगळ-त्तूरु (३७) पेरुंबावूरु (३८) पोळूरु (३९) प्रोद्दुटूरु (४०) बापट्ला (४१) मचिलीपट्टणम् (४२) मदनपल्ली (४३) मधुरै-ए (४४) मधुरै-बि (४५) मदरास्-३३ (४६) मन्त्रा-लयम् (४७) मन्नागुंडि (४८) महानन्दी (४९) राज-महेन्द्री (५०) रा. अ. पुरम् (५१) रायचूरु (५२) लेपाक्षी (५३) विजयनगरम् (५४) विजयवाडा (५५) विरूरु (५६) श्रीकाकुळम् (५७) श्रीरङ्गम् (५८) सखिनेटिपल्ली (५९) सेलम् (६०) हैदराबाद् ।



# 1899 - पिङ्गळ - उत्तरायण - परीक्षा-फलसूची (1978 - मार्च्)

| क्र. स | परीक्षा: | प्र. श्रे. | द्वि . श्रे. | तृ. श्रे. | खण्डश: | आहत्य |
|---|---|---|---|---|---|---|
| 1 | परिचय | 94 | 271 | 350 | — | 715 |
| 2 | अभिज्ञ | 12 | 138 | 133 | — | 283 |
| 3 | विचक्षण | 4 | 51 | 36 | — | 91 |
| 4 | समर्थ | — | 10 | 18 | 25 | 53 |
| 5 | कोवद | — | 3 | — | 20 | 23 |
| | | 110 | 473 | 537 | 45 | 1165 |

| | | | | |
|---|---|---|---|---|
| परिचय | सर्वप्रथम: | 582 | ऐ. चक्रवर्ती | तिरुपति |
| अभिज्ञ | ,, | 821 | श्रीमन्नारायणाचार्यूलु | नडिगड्डुपालेम् |
| विचक्षण: | ,, | 1167 | यम्. गुरुमूर्तिः | मद्रास् 33 |
| समर्थः | | — | | |
| कोविद | | — | | |

# परीक्षा-विवरणम्



| परीक्षाः | | आवेदकाः | उपस्थिताः | उत्तीर्णाः | प्रतिशतम् |
|---|---|---|---|---|---|
| परिचय | | 962 | 860 | 715 | 83% |
| अभिज्ञ | | 370 | 343 | 283 | 82% |
| विचक्षण | | 100 | 97 | 91 | 94% |
| समर्थ | पूर्णतः | 38 } 56 | 53 | 28 } 53 | 100% |
| | खण्डशः | 18 | | 25 | |
| कोविद | पूर्णतः | 8 } 29 | 25 | 3 } 23 | 92% |
| | खण्डशः | 21 | | 20 | |
| आहत्य | | 1517 | 1378 | 1165 | 80% |

## १९७८ सेप्टंबर् १६, १७, १८ परीक्षा दिनाङ्काः

## Programme of Examinations
## 16, 17, 18thSeptember 1978

विना विलम्बशुल्कं आवेदनपत्राणां प्रेषणीयान्तिमतिथि: 20-7-78
1 रू. विलंबशुल्केन सह आवेदनपत्राणां प्रेषणायान्तिमतिथि: 31-7-78

आवेदनपत्राणि प्रत्येकं 0-05 पैसागणनानुरोधेन मूल्य प्रेषणे प्रेष्येरन् ।

31-7-78 **परत: प्रेष्यमाणानि**
**आवेदनपत्राणि सुतरां न स्वीक्रियेरन् ।**

समर्थ-कोविदपरीक्षयो: निर्णीतकेन्द्रेष्वन्यतम: स्वीकर्तव्य: ।

| | | |
|---|---|---|
| परिचय: रू. 2-00 | अभिज्ञ: रू. 4-00 | |
| विचक्षण: रू. 6-00 | समर्थ: रू. 8-00 | खण्डश: रू. 3-00 |
| कोविद: रू. 12-00 | खण्डश: रू. 5-00 | |

(सूचना - समर्थपरीक्षाया: चत्वार: खण्डा: इति बोध्यम्)

विशेषानुमतिशुल्कम् (Exemption Fee) 5-00
विलम्बशुल्कम् (Late Fee) रू. 1-00

परिचयाभिज्ञ - विचक्षण - समर्थ - पाठ्यपुस्तकानि सभायां लभ्येरन्। विशेषजिज्ञासायां 25 पैसामात्रा: पोस्टल्चीटिका: (Stamps) प्रेषणीया: ।

परीक्षामन्त्री,
संस्कृतभाषाप्रचारिणी सभा,
चित्तूरु (आं. प्र.)

# त्रिशब्दस्य महत्वम्

— श्रीमती डि. अन्नपूरणी, नवदेहली-१९

१) अस्माकं ऋग्वेद यजुर्वेद सामवेदश्चेति त्रय एव वेदाः ।

२) भारतीयधर्मे 'ब्रह्मविष्णुमहेशाः' इति त्रिस्र एव देवताः ।

३) पृथिव्यन्तरिक्षदिवश्चेति त्रय एव लोकाः ।

४) अस्माकं गायत्रीमन्त्रोपि त्रिपद एव ।

५) 'भूर्भुवस्स्वश्च' इत्येतास्तिस्र एव व्याहृतयः ।

६) 'सत्वरजस्तमांसि' इत्येते त्रयः साख्याभिमता गुणाः ।

७) यज्ञस्याहुतयोऽपि त्रिधा भवन्ति-स्वाहा, स्वधा, वषट्चेति।

८) अस्मिन् जगति त्रय एव व्याधयः, आदिदैविकी, आधिभौतिकी, आध्यात्मिकी च ।

९) त्रीण्येव 'शारीरिक मानसिकात्मिकानि' च सुखानि ।

१०) मनुष्यजीवने शैशवावस्था, यौवनावस्था, वृद्धावस्था चेति तिस्रोऽवस्था भवन्ति ।

११) मनुष्यस्य दैनिकजीवनेऽपि 'जाग्रत्सुषुप्तिस्वप्ना' इति तिस्र एवावस्थाः ।

१२) मनुष्य जीवनस्य एषणा अपि तिस्र एव लोकैषणा, वित्तैषणा, पुत्रैषणा चेति ।

१३) गीतायां भगवत्प्राप्तये त्रय एव मार्गाः निर्दिष्टाः कर्ममार्गः, भक्तिमार्गः, ज्ञानमार्गश्च ।

१४) यज्ञस्याग्नयोऽपि त्रय एव — 'गार्हपत्याग्निः आहव-नीयाग्निः दक्षिणाग्निश्च ।

१५) संगीतशास्त्रेऽपि नर्तनं, वादनं, गानं इति त्रीणि एव अङ्गानि।

१६) एकवचन, द्विवचन, बहुवचनानि इत्येतानि त्रीणि वचनानि।

१७) स्त्रीलिंगं, पुंलिंगं, नपुंसकलिंगं इत्येतानि त्रीणि लिंगानि ।

१८) संस्कृतभाषायां व्याकरणशास्त्रस्य पाणिनिः, कात्यायनः, पतञ्जलिश्चेति त्रय एवाचार्याः ।

१९) पारमार्थिकी, व्यावहारिकी, प्रातिभासिकी चेति तिस्रः सत्ताश्च स्वीकृताः ।

२०) एकदिवसस्यापि 'प्रातः, सायं, रात्रिश्च' इत्येते त्रय एव भागाः ।

२१) अस्माकं विद्यामन्दिरेष्वपि छात्राणां त्रिमुखी विकासः क्रियते 'शारीरिको, मानसिकः आध्यात्मिक'श्चेति ।

२२) अस्माकं सेनाया अपि त्रय एव विभागाः जलसेना, स्थल-सेना, वायुसेना चेति ।

२३) अस्माकं राष्ट्रीयध्वजेऽपि 'काषायश्वेतहरिताः' त्रय एव वर्णाः ।

२४) अस्य जगतोऽपि जन्मस्थितिप्रलया इति तिस्र एवावस्थाः ।



# मेघान्योक्तयः

— बालगणपतिभट्टः, श्रीरङ्गपत्तनम् ।

त्वद्ध्यानमग्नः खलु चातकौघः
वाञ्छन्ति वृक्षास्तव दर्शनं भोः ।
नद्यङ्गनास्त्वां नितरां भजन्ते
एको मरु मेघ तवाऽतिदूरः ॥ १

कण्ठे निजासून् विनिगृह्य नित्यम्
कुर्वन् प्रतीक्षां किल चातकोऽस्ति ।
प्राणान् स यावन्न जहाति तावत्
आगच्छ श्रेयः कर वारिवाह ॥ २

प्रचण्डदावानलदीपकोऽयम्
वायुस्सदाऽल्पं हरतीह मेघम् ।
पुष्टस्य पुष्टि र्भवतीह लोके
नाऽपुष्टचिन्ता न च दृश्यते हि ॥ ३

दातुं समर्थोऽस्ति नवाम्बुधाराम्
वर्षाम्बुदो दुःखितचातकाय ।
नीत्वा त माशूड्डयसे कुतो वा
प्रचण्डवायो किमिदं कुकार्यम् ? ४



# पुस्तकसमीक्षा

पुस्तकम् — गोदा श्रीसूक्तिः मूल्यम् रु ८-००

(नाच्चियार् तिरुमोळि)

"श्रीचरणरेणु"वर्यसमायोजितया श्रीसूक्तिसौरभाख्यया लघुव्याख्यया सहिता।

प्रकाशिका - श्रीगोदा ग्रन्थमाला, मुसुनूरु, कृष्णमंडलम्, आन्ध्रप्रदेशः।

"नाच्चियार् तिरुमोळि" नामकं दिव्यप्रबन्धभागं आन्ध्र-भाषायां लघुटीकातात्पर्यसाहित्येन "श्रीचरणरेणुः" प्रकाशयति स्मेति प्रकटयितुं हर्षनिर्भराः स्मः। आन्ध्रभक्तजनायाः द्राविड नालायिर दिव्यप्रबन्धानां कृते कृतोऽयं आचार्य व्यवसायः नून मभिनन्दनीयः। "गोदा कन्या प्रेमयोग" इति शीर्षिकया कोत्त-वेंकटेश्वरराव (यम्.ए, एल्.एल्.बि.) महोदयकृतया विपुल भूमिकया सशोभितोऽयं ग्रन्थः पठितॄणां ग्रन्थ प्रतिपाद्य वस्तुनः परिज्ञानं करतलामलकं भवेदित्यत्र नैव संशयः।

---

## श्रीरामानुजदिग्विजययात्रा

प्रकाशिका — भगवद्रामानुजसुप्रभातसभा, चित्तूरु।

स्वीय द्वितीयवार्षिकोत्सव कार्यक्रमनिवेदिकायां श्रीभगव-द्रामानुजाचार्य दिव्यावतार लीलाविशेषाः संवत्सरे स्साकं आन्ध्र-भाषायां प्रकाशिताः।

अत्र स्वामिपादानां तिरुनक्षत्रश्लोकः (अवतारश्लोकः) चरमश्लोकश्च समायोजितः।

मुद्रण - स्खालित्यानि – चैत्रमासे = चैत्रेमासे, छत्रियुत = च त्रियुत, योगिराजस्वभोगीसभाबम् = योगिराज स्स्वभोगि-स्वभावं इत्यादीनि शोधनीयानि।

"अवरः"

पुस्तकम् — श्री चण्डीध्वज दिव्यस्तोत्रम् मूल्यम् रू. ०-२५

प्रकाशकाः — चिन्तामणिसंस्कृतग्रंथमाला, चिन्तामणिः,
३८-कृष्णारोड्, न्यूपेरुङ्गळत्तूरु
श्रीनिवासनगर्-पोस्ट्, मद्रास्-६३

द्वादश (१२) पृष्ठ परिमितायां अस्यां पुस्तकायां दुर्गाद्वात्रिंशन्नाममालया साकं मार्कण्डेयान्तर्गतं श्री चण्डीध्वज दिव्यस्तोत्रं मुद्रापित मस्ति। भक्ताना मभीप्सितार्थसिद्ध्यर्थ मिदं स्तोत्रं अहरहरनुसन्धेय मित्यत्र नैव विप्रतिपत्तिः।

"राज्यं देहि धनं देहि साम्राज्यं देहि मे सदा" इत्यस्य पुनः पुनरावृत्ति रस्ति।

"नमो माहेश्वरी देवि"।
"नमस्तेऽस्तु च कौमारी"।
"नमस्ते वैष्णवी देवि"।
"शाकंबरि नमस्तेऽस्तु'।
"नमस्ते भ्रामरी देवि"।
"श्री सुन्दरी नमस्तेऽस्तु"।
"नमो भगवती देवि"।
"दिव्ययोगिनी नमस्तेऽस्तु'।

इत्यादौ मुद्रणस्खालित्यं शोधनीयं भवति।



# स्वप्नोऽपि यदि सत्यः स्यात्!

भवतु, पुनरागम्यते इति वदन् अन्यत्रागच्छम्। तत् किञ्चन वैद्युतिकनाटकभवनम् सिनिमाप्रदर्शनशाला। तत्परितः नानाविधैः नटचित्रैः अलंकृतानि सूचनाफलकानि बृहन्ति स्थापितान्यलक्ष्यन्त। तन्नूतनं चित्रमिति श्रुतम्। किन्तु द्वारि जना विरला एवाऽसन्। तत्र श्रेणीनियमः (Q) नादृश्यत। केशाकेशि, मुष्टीमुष्टि वा न दृष्टम्। किमेतदित्याश्चर्यं भजन्नहं तत्रत्यं रक्षाभटं एव सपृच्छम् – भोः! अत्र नाटकालये प्रतिदिनं कति नाटकानि प्रदर्श्यन्ते? जनाः सिताः सन्ति। जनानां नाटकदिदृक्षा नास्ति किम्? विद्युन्न्यूनता (Power cut) न भवति खलु? इति। रक्षाभटः सस्मितमवोचत् मित्रवर्य! नगर्यामस्यां प्रतिनाटकभवनं अहोरात्रं नाटकानि प्रदर्श्यन्ते। जनाः अत्रत्याः रसिकतमाः शान्ताश्च। अत एव कलहः मनागपि न जायते। प्रथममेव नाटकभवनाधिकारिभिः प्रतिगृहं गत्वा रूप्यकस्वीकारपूर्वकं प्रवेशपत्राणि आवश्यकानि दीयन्ते। अपेक्षावन्तः तत्रैव गृह्णन्ति। अन्ये त्वत्रागत्य स्वीकुर्वन्ति। अत एवात्र (Q) नियमः नास्ति। सागरीयजलात् विद्युदुत्पाद्यतेऽत्र। विद्युच्छक्तिः न्यूनता वा न कदापि भवेत्। विद्युज्जनैः यथेष्टं व्ययीक्रियते। न कोऽपि नियमः। नगर्यां सर्वत्र सूर्यकल्पाः विद्युद्दीपाः प्रकाशन्ते। अन्धकारस्य नामपरं अस्माभिः श्रुतं, न कदापि दृष्टम्। नाटकदर्शन प्रवेशशुल्कमपि स्वल्पमेव। सर्वकारीयमोदकरथानेषु धूमशकटेषु च परिमिता जनाः उपविशन्ति। अधिकः नैकोऽपि। अवश्यगन्तव्यानां, कार्यालयीय कर्मकराणां विद्यार्थिनां च कृते प्रतिक्षणं प्रत्येकतया अनेकानि वेगयानान्युपयुज्यन्ते। अत एव कारणात् निर्दिष्ट

काले निर्दिष्टं स्थलं प्राप्तुं शक्यते सर्वैरपि। एतावदेव न। समीपे शाकविक्रयशाला च वर्तते। तत्र वार्ताकादयः शाकाः प्रभूताः उपलभ्यन्ते। मूल्यमपि अत्यल्पम्। आगन्तुकानां जनानां कृते सर्वकारैरेव निवासार्हाणि गृहाणि अनल्पानि निर्मितानि। तत्र वासार्थं प्रतिमासं पञ्चरूप्यकाणि वासशुल्कत्वेन निर्णीतानि। अस्मद्देशे मृत्तैलकूपाः अनेके सन्ति। अतश्च अत्र मृत्तैलं सर्वदा भूरि लभ्यते। नगरेऽत्र सर्वविद्याः कलाशालाः राजन्ते। तासु प्रवेशाय यम्. यल्. ए. साहाय्यं सचिवाद्यधिकारिदया वा नापेक्ष्यते। सर्वेषां कृते तत्तद्योग्यं तदभिलषितं च स्थानं तत्तत्कलाशालासु पूर्वमेव निर्धार्यते अधिकारिभिः। अत्र वर्णभेदः, धनिकरिक्तभेदो वा न वर्तते। अतः विद्यार्थिनां न विद्याप्रयुक्तः श्रमः। अत्र नानाविधाः कक्ष्याः (राजकीयाः) न सन्ति। आधिकारिकी एका, तत्प्रतिपक्षरूपिणी अपरेति द्वे कक्ष्ये एव। नगरीमिमां इतोऽप्यधिकसुखवासयोग्यां कर्तुं नगरविचक्षणैः निश्चयः कृतः। अचिरादेव पुरमिदं स्वर्गतुल्यं भविष्यति ध्रुवमिति। महान्तं सर्वविषयकं उपन्यासमेकं विरचय्य जोषमाप सः। एवं विधायाः आश्चर्यपरम्परायाः दर्शनेन श्रवणेन च विस्मयस्य परांकाष्ठां अधिगच्छतो मम मुखात् एकं अक्षरमपि न निस्ससार। किमस्माभिः स्वीकार्यं, किं परित्याज्यं इति निश्चेतुमशक्नुवन् अहं, "अस्मादृशैः दरिद्रैः अत्रैव निवसितव्यम्। इयमेव अमन्दानन्दप्रदः भूलोकस्वर्गः। अतः गृहे दुःखं अनुभवतः भार्यापुत्रानाहूय गूढ एव एवात्रागन्तव्यम्। न कार्यः क्षणमपि कालविलम्बः" इति निश्चित्य वेगेन गृहं प्राप्य, भार्यायै दृष्टं श्रुतं च सर्वं उच्चैः आवेदयम्। सगद्गदं प्रलपन्तं मामुत्थाप्य मद्भार्या, किं भोः! दिवा कोऽसौ स्वप्नः दृश्यते? उत्तिष्ठतु, गृहे शर्करा ईषदपि नास्ति, पुरःस्थितात् गृहात् शर्करां अभ्यर्थ्य काफी सज्जीकृता अद्य। द्रुतं

पीत्वा आपणं गच्छत्विति गृहे मन्निक्षिप्तां शर्करामपश्यन्ती स्वभाव-सिद्धं अभावप्रलापं कुर्वन्ती मद्धस्ते काफीपात्रं निचिक्षेप। प्रबुद्धः सन्नहमपि, अहो! वृत्तं सर्वं स्वप्न एव। न तु सत्यम्। अयं स्वप्न एव यदि सत्यः स्यात्.........लोकेऽस्मिन् प्रतिक्षणं जायमानः अनेकरूपः उदरपोषणहेतुकः कलहः कथं संभवेत्? जनानां तत्रापि मादृशां अकिञ्चनानां स्वर्गचिन्ता तज्जिगमिषा वा न कदापि जायेत। "भूलोकवासोस्तु न चास्तु नाकः" इत्येव सन्ततं जनाः भगवन्तं प्रार्थयेरन्। तादृशः शुभप्रदः कालः कदा आगमिष्यति? अस्मान्नरकवासाद्विमुक्तिः मम कदा भविष्यति! इति मन्दं कथयन् काफीं पीत्वा पुनः मित्रमेकं द्रष्टुं प्रस्थितोऽभूवम्॥

## वन्दे भारतम्

— जयेशः, पुसद्।

वन्दे भारतं सुजनं सुषमं हिमनगशीतलम्।
सस्यशाद्वलं भारतं वन्दे भारतम्॥

शुभ्रगङ्गा शुचिजलपूजितं फुल्लपरिमल द्रुमवनशोभितम्।
शुभङ्करं बहुविधभाषिकं सुखदं वरदं भारतं वन्दे भारतम्॥ १
शान्तिपूजकं रणभयहारकं वेदनिष्ठं श्रुतिस्मृतिपावनम्।
विश्व विजयिनं जगति समुन्नतं प्रशंसितं जनमतिहारकम्॥
सूनृतं सुश्रुतं भारतं वन्दे भारतम्॥ २

दास्यभञ्जकं स्वजनसुशासितं राष्ट्रसन्धे सुनिहितगौरवम्।
फुल्लविकसित जनगण मानसं सुखाश्रितं बहुजनतारकम्॥
सुभगं सुबलं भारतं वन्दे भारतम्॥ ३

# तेलुगु - साहित्य - दिग्दर्शनम्

"अवरः"

१) कवित्रयम् २) पाल्कुरिकि सोमनाथः ३) श्रीनाथः - पोतनार्यश्च ४) श्रीकृष्णदेवरायसार्वभौमः ५) वेमनादयः शतककाराः दाक्षिणात्य तेलुगुविकासः ७) सि. पि. ब्रौन्महोदयः तदितरे च ८) कन्दुकूरि वीरेशलिङ्गंपन्तुलुः ९) आधुनिक साहित्य विकासः – इति ।

**नन्नयार्यः —**

एकादशशताब्दे विख्यातः नन्नयनामा महाकविः सामन्यतः तेलुगुसाहित्यक्षेत्रे आदिकविरिति सम्भाव्यते । यद्यप्ययं आदिकविरिति प्रथितः, तथाऽपि कतिपय कविपुंगवाः ततः पूर्वमपि अवश्यं स्युः; परन्तु कालदोषवशात् तान् कवीन्, तदीयानि काव्यानि चाधिकृत्य नाऽधिकं ज्ञायते ।

नन्नयार्यः न केवलं कविः अपितु संस्कृतान्ध्रभाषयो रुभयोरपि महान् विद्वांश्चाऽसीत् । सः चालुक्यवंशस्य राज्ञः राजराजनरेन्द्रस्य आस्थाने कविपण्डित-स्थान मलञ्चकार । चालुक्यवंशीया एव राजानः प्रप्रथमं तेलुगुभाषा मधिकारभाषा मकुर्वन्; अत एव सा सर्वाङ्गीणाभिवृद्धि प्राप्तुं प्रवृत्ता; फलतः उत्तमकविता - प्रादुर्भावोऽपि जातः । राजराजनरेन्द्रस्य अभ्यर्थनां पुरस्कृत्य नन्नयार्यः महाभारतरचना मुपक्रान्तवान् । श्रीवेदव्यासकृत संस्कृतमहाभारतस्य आन्ध्रीकरणे आदिसभा पर्वद्वयावधि कृतकृत्यतां प्राप्तः नन्नयार्यः अरण्यपर्वणि "शारदरात्रे"ति पद्य-

पर्यन्तमेव रचयितुं पारयामास। आन्ध्रानुवादे नन्नयार्यः श्लोकानुवादशैलीं विहाय मूलानुवादशैलीमेव पर्यग्रहीत्। गद्यपद्यात्मक चम्पूशैली माश्रित्य महाभारतान्ध्रानुवादः प्रवृत्तः; या च शैली पश्चात् पुराणाना मनुवादे कविभि रन्यैरप्यादृताऽऽसीत्। कथाकथने नन्नयार्यस्य कौशल मत्यन्तं प्रशंसनीयम्। प्रसाद गुणवैशिष्टय संस्कृत-समास पदभूयिष्ठत्वेऽपि नन्नयकवितायाः सौन्दर्यमाधुर्यादिकं पोषयति स्म।

"आन्ध्रशब्दचिन्तामणि" नामको व्याकरणग्रन्थः तेलुगुभाषायाः नन्नयार्येण संस्कृते विरचितः इत्युच्यते। तद्ग्रन्थकर्तृत्व मधिकृत्य आधुनिकविमर्शेऽस्ति प्रश्नः। तथाऽपि तदीयानि सूत्राणि तावदुल्लेखनीयानि। कस्मिंश्चित्सूत्रेऽय मभिप्रायः स्पष्टीकृतः यत् भाषा नदीप्रवाहवत् परिवर्तमाना न तु स्थिरा इति। ततश्च नदीप्रवाहे यथा नवीनजलप्रवाहस्य अवकाशोऽस्ति तथा जीवद्भाषायामपि नवीनविचारधारायाः अत्यवकाशो वरीवर्ति। एव मन्यस्मिन्नपि सूत्रे जनबाहुल्ये प्रयोगसिद्धानामेव शब्दानां शुद्धता समग्रता च सिद्धचतीत्युक्तम्।

समकालीनाः —

नन्नयार्यस्य समकालीनानां मध्ये नारायणभट्ट नामकः पण्डितप्रवरः अग्रगण्यः यः कर्णाटकभाषायां पैशाचिक प्राकृतं चान्तर्भाव्य अष्टसु भाषासु निष्णातः। अयं नन्नयार्यस्य महाभारतान्ध्रीकरणे साह्यं कृतवानित्युच्यते, परन्तु तत्कीदृशमिति न ज्ञायते।

नन्नयार्यस्य देहावसानानन्तरं प्रायशः शताब्दद्वयपर्यन्तं अयं महान् ग्रन्थः अपूर्ण एव स्थितः, यावत् तिक्कनार्यः विराटपर्व आरभ्य अमुं ग्रन्थं न पूरयामास।

तिक्कनसोमयाजी - महाभारतं च —

तिक्कनार्ये नाटकदर्शकत्वं कविप्रज्ञावैभवं चेत्युभयं प्रतिभाति। अत एव तिक्कन भारतं पठतां समक्षं नाटकप्रदर्शनेन या रसानुभूतिः साऽवश्यं जायते। अयमपि भारतान्ध्रीकरणे स्वपूर्वपुरुषदृक्पथं अनुसरन् मूलग्रन्थस्य यथातथानुवादं उत्सृज्य विषयग्रहण पुरस्सरं स्वकीययैव शैल्या ग्रन्थानुवाद मकार्षीत्। उदाहरणार्थं मौलिक भगवद्गीतानुवादो ग्रहीतुं शक्यते। मूले श्लोक (७००) सप्तशत्यां भगवदगीतायाः यो भावः विशदीकृतः तस्यैव सारांशं द्वित्रेषु पद्येषु तिक्कनार्यः सञ्चिक्षेप। आधुनिक विमर्शकेषु कतिपयाः पण्डिताः एव सभिप्रयन्ति यत् भगवद्गीताग्रन्थः मूलग्रन्थे पश्चात्सम्भूतः अनुबन्ध एवेति यद्ययं भावो यथार्थः, तर्हि मौलिक भगवद्गीतायाः यथातथानुवाद मकृतवतः तिक्कनार्यस्य विमर्शनात्मक दृक्पथोऽवश्य मभिनन्दनीय एव स्यात्। कथानुगतवर्णनाचातुर्यं, तत्तद्व्यक्तीनां चरित्रचित्रणं, तत्र तत्र यथोचित नाटकीयशैली प्रवेशन मित्यादिकं तिक्कनभारतस्य निराडम्बर गाम्भीर्यं दर्शय त्तेलुगुसाहित्यस्य तदनर्घं रत्नं विरूपयति।

किन्तु अष्टादशपर्वसहित-महाभारतस्य न तावत् सौलभ्यं यावत् नन्नयार्य रचनापरिशिष्टस्य अरण्यपर्वशेषस्य एर्रनार्येण पूरणं न समपद्यत। "नन्नय - तिक्कन - एर्रन" इत्येतत् कवित्रय मेव आन्ध्रमहाभारतस्य जनकत्वं प्राप्य भविष्यत्कविपरम्परायाः अपि मार्गदर्शक मभूत्। चेल्लपिल्ल वेङ्कटशास्त्रिमहोदयेन संयुक्त-मद्रास्राज्यस्य सर्वप्रथमास्थानपण्डितेन सुष्ठूक्तं एतन्महाभारत मधिकृत्य यत् तेलुगुकवीनां कृते अयं ग्रन्थः वेदोऽभवदिति। तेलुगुभाषाया मन्याप्यस्ति लोकोक्तिः या भारतमाहात्म्यं प्रस्तौति —

"विंटे भारतं विनालि, तिंटे गारेलु तिनालि" यस्या अयमर्थः - श्रोतव्यं चेत् महाभारतमेव श्रोतव्यम् - भोक्तव्यं चेत् गारे - भक्ष्यमेव (माषापूपः) भोक्तव्यमिति। कवित्रयादुद्भूतमेत त्तेलुगु-महाभारतं पूर्वोक्तस्य सजीवोदाहरणं विराजते।

**निर्वचनोत्तररामायणम् —**

यद्यपि तिक्कनार्यस्य "उत्तमकृतिः" (Magnum opeus) महाभारतं भवति, तथाऽपि तस्य प्रथमकृतिस्तु निर्वचनोत्तररामायणमेव। नाम्नैवेदं विज्ञायते, यदयं ग्रन्थः आदितः अन्तं, विना गद्यं पदचैरेव कृत इति। ततःपूर्वं कविभिः गदच-पदचात्मिकैव चम्पूशैली समादृताऽऽसीत्। काव्यमिदं श्रीरामचन्द्रस्य दाशरथे रुत्तमं चरितं विवृणोति। कविरस्मिन् काव्ये मौलिक कथातः स्वतन्त्रविचारधारां प्रवर्तयामास। कविः श्रीरामस्य निर्याणवृत्तान्तं व्यसृजत्। इदमेकं मुख्यं कथावस्तु परिवर्तनम्। तिक्कनार्यः कविब्रह्मेति विख्यातिं शत-प्रतिशत मर्हति; यतः स उत्तमकाव्यनिर्माता बभूव।

**एर्रनार्यः —**

एर्राप्रगडापरनामधेयोऽयं कविः महाभारतप्रणेतुः कवित्रयस्य अन्यतमः। अस्य कीर्तिः न केवलं महाभारतस्य पूरणे नैव अपितु "हरिवंशः, नृसिंहपुराणम्" इति प्रमुखग्रन्थद्वयमयं रचयामास। अस्य वर्णनात्मकशैली अतिप्रसिद्धा। अयं प्रबन्धपरमेश्वर इति प्रथितः यतोऽस्मादेव (१६) षोडशशताब्दीय - प्रबन्धकर्तॄणां कविशेखराणां तन्निर्माणोपयोगीनि लक्षणानि समुपलब्धानि।

[अनुवर्तते]



भारतसर्वकारेण पुरस्कृता

## गैर्वाणी



वार्षिकम् ५-००

---

## प्रहेलिका



सर्वस्वापहरो न तस्करगणो रक्षो न रक्ताशनः
सर्पो नैव बिलेशयोऽखिलनिशाचरो न भूतोऽपि च ।
अन्तर्धानपटुर्न सिद्धपुरुषो नाप्याशुगो मारुत
स्तीक्ष्णास्यो न तु सायकस्तमिह ये जानन्ति ते पण्डिताः ॥

मत्कुणः ।

Please mention your membership Number for easy correspondence.

*R. N. 1845/60.* *Postal C. T. R. 11.*

आन्ध्रप्रदेशसर्वकारेणानुमोदिता R. C. No.27-A 3/65 Dated 14-7-'65.
Licensed to Post without Prepayment. LICENCE No 1

# गैर्वाणी

To

Sri

1008. The Editor,
Gurukula Patrika,
Gurukula,
Kangedi Viswa Vidyalaya,
Haridwar.

If undelivered please return to
Sanskrit Bhasha Pracharini Sabha, Chittoor A P. 517001

**Published by Sri N. Ramanatha Aiyar, B.A., B.L., Advocate & Secretary.**
**S. B. P. Sabha, Chittoor. (A. P.)**
**Printed by Sri K. V. Raghavan (in-charge)**
**at Vijaya Press. Chittoor. (A. P.) C. 1500.**

